# SABDARTHARATNAM

OR A TREATISE ON THE

PHILOSOPHY OF GRAMMAR

BY

TARANATHA TARKAVACHASPATI

*Professor of Grammar, Govt. Sanskrit College.*



Calcutta:

PRINTED AT THE KAVYAPRAKASHA PRESS.

1872.

*To be had from Pandit Jibananda Vidyasagara B. A. Govt. Sanskrit College of Calcutta.*

# शब्दार्थरत्नम्।



वैयाकरणमतजिज्ञासूनां बोधनार्थम्



गवर्णमेण्ट्संस्कृतविद्यालयाध्यापक-

श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण

विरचितम्,

तेनैव संस्कृतम्।



१९२९ संवत्सरे

कलिकाताराजधान्याम्

काव्यप्रकाशयन्त्रे

मुद्रितम्।

## मुखबन्धः ।

अभिवन्द्य जगद्वन्द्यां देवीं वाचामधीश्वरीम् ।
शब्दार्थरत्नं क्रियते श्रीतारानाथशर्म्मणा ॥
साधुशब्दार्थबोधाय प्रवृत्ता ये महर्षयः ।
तद्वाक्यमवलम्ब्यैव शब्दार्थोऽत्र निरूप्यते ॥
वैयाकरणसिद्धान्तो दुर्बोधो ग्रन्थगौरवात् ।
अल्पायासेन तद्बोधसाधनाय ममोद्यमः ॥
सुधियो वङ्गदेशीया न्यायादरसमन्विताः ।
तत्प्रदर्शितया रीत्या शब्दार्थज्ञानसाधनाः ॥
तद्बोधनाय यतते मञ्जूषाद्यनुसारतः ।
वात्स्यवंशावतंसस्य श्रीकालिदासविदः सुतः ॥
शब्देन्दुशेखरे प्रोक्तं यच्चोक्तं शब्दकौस्तुभे ।
भूषणादौ च यत् प्रोक्तं तन्मूलं लिख्यतेऽखिलम् ॥
इदं मदुक्तं शृण्वन्तु हृदये धारयन्तु च ।
कलयन्तु निजं भावं सन्तः सान्त्वेन याचिताः ॥
खलाः खेलन्त्यसत्तर्कैः प्रकृत्या निर्म्मलेष्वपि ।
सरलास्त्वनुकूलाः स्युर्विरलास्ते हि साम्प्रतम् ॥

### ग्रन्थारम्भप्रयोजनादि ।

सर्वेषां व्यवहाराणां मूलं शब्दार्थनिर्णयः ।
स च व्याकरणादेव मुनिभिस्तेन तत् कृतम् ॥
"एकः शब्दः सुप्रयुक्त" इत्यादि—श्रुतिबोधितम् ।
धर्म्मार्थत्वं प्रयोगस्य स च शास्त्रान्न चान्यतः ॥

"तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्व्वविद्यानाम्" इत्युक्तं हरिणापि च ॥
पुरा पुरारेः सम्प्राप्य दाक्षीपुत्रेण सूत्रितम् ।
अष्टाध्यायीस्वरूपं यत् मुख्यं व्याकरणं हि तत् ॥
उपदेशक्रममाहात्म्यादार्षज्ञानाच्च पाणिनेः ।
वेदाङ्गत्वेन शिष्टैश्च संग्रहान्मुख्यमेव तत् ॥
तत्रावशिष्टशब्दानां साधुत्वज्ञापनाय यत् ।
कात्यायनेन मुनिना निर्म्मितं वार्त्तिकं हि तत् ॥
तयोर्व्याख्यामुखेनैव पतञ्जलिमुनेः कृतिः ।
भाष्यं, तेषां त्रयं लोके कालेन विलयं गतम् ॥
एषा जनश्रुतिर्लोके रावणेनोपले पुरा ।
चित्रकूटे विलिखितं भाष्यादिकमभूत् किल ॥
विप्ररूपपिशाचेन तत आनीय केनचित् ।
ददे तद्वसुराताय सर्व्वलोकहितैषिणा ।
वसुरातोऽपि हरये स्वशिष्याय ददौ पुनः ।
तेन लोके प्रचारार्थमादौ टीका कृताऽमला ॥
महाभाष्यार्थतात्पर्य्यज्ञापिकाः कारिकाः स्वयम् ।
कृत्वा वाक्यपदीयाख्यं निबन्धं कृतवान् हरिः ॥
पश्चात् कैयटमुख्यैस्तु तच्छास्त्रं बहुलीकृतम् ।
विख्यातं दाक्षिणात्यादौ पुनर्व्वङ्गेष्वलीयत ॥
बङ्कायासससाध्येभ्यस्तेभ्यः सारसमाहृतेः ।
अल्पायासेन बोधार्थमिदमारचितं मया ॥

# वर्णविशेषस्थानादिनिर्णयः ।

| वर्णः | स्थानम् | आभ्यन्तरप्रयत्नः | वाह्यप्रयत्नः |
|---|---|---|---|
| अ, आ, अ ३ | कण्ठः | विवृतम् | संवारनादघोषाः, अल्पप्राणश्च |
| इ, ई, इ ३ | तालु | विवृतम् | संवारादयः |
| उ, ऊ, उ ३ | ओष्ठौ | ,, | ,, |
| ऋ, ॠ, ऋ ३ | मूर्द्धा | ,, | ,, |
| ऌ, — ऌ ३ | दन्तमूलम् | ,, | ,, |
| ए — ऐ | कण्ठतालु | ,, | ,, |
| ओ, — औ | कण्ठोष्ठम् | ,, | ,, |
| अं | नासिका | स्पृष्टम् | संवारादयः, महाप्राणश्च |
| अः | आश्रयस्थानानि | स्पृष्टम् | विवारश्वासाघोषाः महाप्राणश्च |
| ×क ×ख | जिह्वामूलम् | ,, | संवारादयः |
| ⌓प, ⌓फ | ओष्ठौ | ,, | ,, |
| क | कण्ठमूलम् | ,, | विवारादयः, अल्पप्राणश्च |
| ख | कण्ठमूलम् | ,, | विवारादयः महाप्राणश्च |
| ग | ,, | ,, | संवारादयः, अल्पप्राणश्च |
| घ | ,, | ,, | संवारादयः महाप्राणश्च |
| ङ | ,, नासिका च | तद् | संवारादयः अल्पप्राणश्च |
| च, छ, ज, झ | तालु | स्पृष्टम् | चछोर्विवारादयः जझोः संवारादयः चजोरल्पप्राणः छझोर्महाप्राणः |
| ञ | ,, नासा च | ,, | संवारादयः अल्पप्राणश्च |

# शब्दार्थरत्नम्।

ग्रन्थारम्भः।

तत्र व्याकरणं नाम शब्दानुशासनम् "अथ शब्दानुशासनमिति" भाष्योक्तेः। शब्दानामनुशासनं शब्दानुशासनम् अनुशासनञ्च असाधुभ्यो विविच्य ज्ञापनम् अनुशिष्यते असाधुभ्यो विविच्य ज्ञाप्यते येनेति व्युत्पत्तेः। व्याकरणारम्भे एव भाष्ये तथोक्तेः व्याकरणशब्दस्यापि तादृशार्थकता तथा च व्याक्रियन्ते असाधुभ्यो विभज्य बोध्यन्ते साधवो येनेति व्युत्पत्तावपि शब्दानां बोधनकर्म्मत्वमर्थागतमवधेयम्।

शब्दानां साधुत्वञ्च शक्तिवैकल्यप्रयुक्तान्यथोच्चारितरूपापभ्रंशभिन्नत्वमभियुक्तोपदिष्टत्वरूपानादित्वं पुण्यसाधनप्रयोगविषयत्वं व्याकरणव्यङ्ग्यजातिविशेषो वा बोध्यम्।

अनपभ्रष्टतानादिर्यद्वाभ्युदययोग्यता।

व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुतेति।

शब्दकौस्तुभेऽभियुक्तोक्तेः। एतेषाञ्च न प्रत्येकलक्षणत्वं टिघुप्रभृतिसंज्ञाशब्दानां कल्पितत्वयानादित्वाभावेन धर्म्मसाधनप्रयोगविषयत्वाभावेन चाव्याप्तेः किन्तु अपभ्रंशभिन्नत्वस्य जातिविशेषस्य वा तल्लक्षणत्वम्। अत एव भर्त्तृहरिणा।

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः।

कथं नु तासां साधुत्वं नैव ताः साधवो मताः॥

इत्याशङ्क्य।

अनपभ्रंशरूपत्वं नाप्यासामपशब्दता।

असाधूनां प्रयोगे वा शक्तवाधोऽपि नो तथेति।

अनपभ्रंशतामात्रेणैव संज्ञाशब्दानां साधुत्वं प्रतिपादितम्।

अनिदं प्रथमाः शब्दाः साधवः परिकीर्त्तिताः।

त एव शक्तिवैकल्यप्रमादालसतादिभिः।

अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः।

इति हरिणा अपशब्दनिर्वचनात्। यद्यपि अनपभ्रष्टत्वमेव साधुत्वं प्रतिपादितमिति प्रतिभाति तथापि जातिविशेषस्यैव साधुत्वलक्षणत्वं युक्तमतो धर्म्मजनकतावच्छेदकतया तज्जातिसिद्धिप्रदर्शनायैव अभ्युदययोग्यतेति प्रथमं निर्दिश्य जातिपक्षस्य सर्व्वोत्तरमभिधानम्। अपभ्रंशस्य अन्यथोच्चारितसाधुरूपतया तद्भिन्नत्वस्य साधुत्वेऽन्योन्याश्रयापत्तेः। चतुर्द्धाप्रदर्शनन्तु विस्तारार्थं पूर्व्वपूर्व्वनिरासेनोत्तरोत्तरव्यवस्थापनार्थञ्च। साधुत्वस्य जातित्वे बाधकस्य साध्वसाधुवर्त्तमानकत्वादिभिः साङ्कर्य्यस्य सत्त्वेऽपि "व्याप्यव्यापकजात्योरिव समानाधिकरणजात्योरपि सङ्करस्यादोषत्वादिति" मञ्जूषोक्तेः "उपाधिसङ्करवत् जातिसङ्करोऽपि तत्रास्तु दूषकतावीजानिरुक्तेरिति" शब्दकौस्तुभोक्तेश्च न बाधकता। अत एव

"समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शब्देन धर्म्मनियम इति"

भाष्यकारेण "एकः शब्दः सुप्रयुक्तः सम्यक् ज्ञातः स्वर्गे

लोके कामधुग्भवतीति" श्रुत्या च साधुशब्दानां धर्मविशेषजनकत्व-प्रतिपादनात् तज्जनकतावच्छेदकतया साधुत्वजातिसिद्धौ फल-बलेन साङ्कर्य्यस्यादूषकत्वम्। अयमेव पक्षः "अभियुक्तोपदिष्टः साधुरिति" जैमिनिसूत्रोक्तसाधुत्वमुदाहृत्य मञ्जूषायां चरमे व्यवस्थापितः। शब्दानाञ्च पुण्यजनकता तत्प्रयोगद्वारा तज्ज्ञा-नद्वारा च बोध्या।

शब्दो हि नाम पृथिव्यादिभूतचतुष्टयक्रियाजन्योऽवकाश-देशोत्पन्नो द्रव्याश्रितो गुणविशेषः। तस्य च भूतचतुष्टयप्रयोज्य-त्वेनाकाशस्थत्वेन चान्वयव्यतिरेकाभ्यां पञ्चभूतगुणता। स च द्विविधः बुद्धिहेतुरबुद्धिहेतुश्च। तत्राबुद्धिहेतुर्मेघादिशब्दः बुद्धिहेतुश्च द्विविधः। स्वाभाविकः काल्पनिकश्च उभयत्रापि ध्वनेरुपकारकत्वात् ध्वन्यात्मकता। तत्र स्वाभाविको वर्णविशे-षानभिव्यञ्जको हसितरुदितादिरूपः प्राणिमात्रसाधारणः। काल्पनिकोऽपि त्रिविधः वाद्यादिशब्दः गीतिरूपः वर्णात्मकश्च। तत्र भेरीशब्दादिरूपो वाद्यरूपः माधवादिरागाभिव्यञ्जकनिषा-दादिस्वररूपो गीतिरूपः ध्वनिविशेषसहकृतकण्ठताल्वाद्यभि-घातजन्यः वर्णात्मकः। "ध्वनिर्नाम यो दूरादाकर्णयतो वर्ण-विशेषमनधिगच्छतः कर्णपथमवतरति प्रत्यासीदतश्च तारत्वा-दिविशेषमवगमयतीति" शारीरकभाष्योक्तेस्तारत्वादिधीहेतु-र्ध्वनिरित्यवसेयम्। जिह्वाया ईषदन्तरपाते वर्णानामनुत्पत्ते-र्ध्वन्युपलम्भात् हसितरुदितादौ च वर्णोत्पत्तिमन्तरेणापि तत्-प्रतीतेश्च सर्व्वशब्दजनकता ध्वनेरवसीयते।

अथ वर्णोत्पत्तिप्रकारस्तावदभिधीयते । चेतनेन ज्ञातार्थं-विवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितमन्तःकरणं मूला-धारस्थितमनलं चालयति तच्चालितश्चानलस्तत्स्थस्यानिल-चालनाय प्रभवति तच्चालितेन चानिलेन तत्रैव सूक्ष्मरूपेणोत्-पादितः शब्दः परा वागित्यभिधीयते । ततो नाभिदेशपर्य्यन्त-चलितेन तेन तद्देशसंयोगादुत्पादितः शब्दः पश्यन्तीति व्यव-ह्रियते एतद्द्वयस्य सूक्ष्मसूक्ष्मतरतया ईश्वरयोगिमात्रगम्यता नास्मदीयश्रुतिगोचरता । ततस्तेनैव हृदयदेशं परिसरता हृदयसंयोगेन निष्पादितः शब्दो मध्येत्युच्यते सा च स्वकर्ण-पिधानेन ध्वन्यात्मकतया सूक्ष्मरूपेण कदाचिदस्माकमपि सम-धिगम्या । ततो मुखपर्य्यन्तमाक्रमता तेन कण्ठदेशं प्राप्य आहत्य मूर्द्धानं तत्प्रतिघातेन परावृत्य च मुखविवरे कण्ठादिषु अष्टसु स्थानेषु स्वाभिघातेनोत्पादितः शब्दो वैखरीत्युच्यते । तदुक्तं शिक्षायाम् ।

आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः ।
वर्णान् जनयते तेषां विभागः पञ्चधा मतः ।
स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानत इति ।

संस्काररूपेण स्वगतानर्थान् बुद्ध्या बुद्धिवृत्त्या समेत्य विषयी-कृत्येत्यर्थः । तथा । सोदीर्ण इत्यत्र सन्धिः पादपूरणार्थः ।

प्राणापानान्तरे देवी वाग् वै नित्यं हि तिष्ठति ।

स्थानेषु विहते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धिनी।
केवलं बुद्ध्युपादाना क्रमरूपानुपातिनी।
प्राणवृत्तिमनुक्रम्य मध्यमा वाक् प्रवर्त्तते।
अविभागा तु पश्यन्ती सर्व्वतः संहृतक्रमा।
स्वरूपज्योतिरेवातः परा वागनपायिनीति।

भारतेऽप्युक्तम्। अत्र प्राणापानान्तरे इत्यधिकरणनिर्देशादाकाशस्थायिता नित्यमित्यभिधानात् यावत्प्रलयपर्य्यन्तस्थायिता प्राणापानादेरपि तथैव नित्यत्वाभ्युपगमात्। न तु क्षणिकता मध्ये उत्पत्तिविनाशकल्पने गौरवात् शब्दार्थयोर्नित्यसम्बन्धस्वीकारादनित्येन शब्देन नित्यार्थसम्बन्धस्वीकारेऽयुक्तत्वापत्तेश्च। नित्यत्वेऽपि तेषां व्यञ्जकसद्भावाभावाभ्यां प्रत्ययाप्रत्ययावित्यन्यत्र विस्तरः। स्थानेषु कण्ठताल्वादिषु अष्टसु स्थानेषु वायौ मूलाधारस्थे विहते विवक्षाप्रेरितमनोनियुक्ताग्निसंक्षोभाच्चलिते इत्यर्थः कृतवर्णपरिग्रहा वर्णभावापन्ना तच्च स्थानेष्विति व्यवहितेनान्वितम्। प्राणवृत्तिनिबन्धिनीत्यनेन प्राणवृत्तेर्वायोस्तत्तद्देशपर्य्यन्तगमनमभिहितं केवलमित्यनेन कण्ठताल्वादिस्थानानपेक्षाभिहिता। बुद्ध्युपादानेत्यनेन हृदयस्थानगमनमुक्तं बुद्धेर्हृदयस्थत्वात्। सर्व्वतः संहृतक्रमेत्यनेन हृदयस्थानगमनानपेक्षाभिहिता। अविभागेत्यनेन मध्यमाया विभागरूपविशेषस्य कर्णपिधानेनाप्यवगमात् पश्यन्त्यास्तु तन्नास्तीति सूचितम्। अनपायिनी स्वस्थानादचलिता

प्राणापानान्तरे मूलाधारस्थितेति यावत् । अतो यथाप्रदर्शितं परादीनां विभागं प्रतिपादयतीदं महाभारतीयमलं विस्तरेण ।

अभिघातस्थानानि चाष्टविधानि सामान्यतो वेदितव्यानि ।

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकोष्ठौ च तालु चेति ।

शिक्षाकृदुक्तेः । वर्णाश्च मतभेदेन त्रिषष्टिश्चतुःषष्टिर्वा शिक्षायामभिहिता वेदितव्याः । यथा

त्रिषष्टिर्वा चतुःषष्टिर्वर्णाः सम्भवतोमताः ।
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ।
अनुस्वारो विसर्गश्च ≍ क ꣸ पौ चापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव वेति ।

अस्यार्थः अ इ उ ऋ इत्येषां ह्रस्वदीर्घप्लुताःकालकृता द्वादश भेदाः ऌकारस्यैको भेदो दीर्घाभावात् प्लुतस्तूत्तरं प्रतिपादितः एचां चतुर्णां ह्रस्वाभावात् दीर्घप्लुतभेदेनाष्टौ भेदाः इत्येकविंशतिः स्वराः । स्पर्शाः कादयो मावसानाः पञ्चविंशतिः । यादयो हान्ता अष्टौ । यमाः वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये पूर्वसदृशाः प्रातिशाख्ये प्रसिद्धाश्चत्वारो वर्णाः । यथा । पलिक्ँक्नी चख्ँख्नतुः । अग्ँग्निः । पतिघ्ँघ्नीत्यादौ । अनुस्वारादयश्चत्वारः स्पष्टाः । ≍ क ꣸ पौ चापि पराश्रितावित्युक्तिस्तु कखयोः परयोरेकविधः पफयोः परयोरन्यविधः कण्ठोष्ठ्यत्वभेदादिति ज्ञापनाय । दुस्पृष्टः ईषत्स्पृष्टःऌकारः ।

अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलस्तथेति अनेन-प्रतिपादितयरलवां धर्म्मस्य ईषत्स्पृष्टत्वस्य ऌकारे कथनात् ऌकारस्य स्वरत्वयलत्वोभयधर्म्मसमावेशात् द्विविधता इति त्रिषष्टिर्भेदाः । ऌकारस्य प्लुतत्वे चतुःषष्टिर्भेदाः ।

एवं वर्णानां सामान्यतो भेदे बोधिते एतेषामुत्पत्तिस्थानानि वाह्याभ्यन्तरप्रयत्नभेदाश्च प्रदर्श्यन्ते । तत्र स्थानानि

हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् ।
औरस्यन्तं वीजानीयात् कण्ठ्यमाहुरसंयुतम् ।
कण्ठ्यावहाविचुयशास्तालव्याओष्ठजावुपू ।
स्युर्मूर्द्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ।
जिह्वामूले तु कुः प्रोक्तः दन्त्यौष्ठ्यो वः स्मृतो बुधैः ।
ए ऐ तु कण्ठ्यतालव्यावोऔ कण्ठ्योष्ठजौ स्मृतौ ।
अर्द्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् ।
ओकारौकारयोस्तद्वदिति ।
अनुस्वारयमानाञ्च नासिका स्थानमुच्यते ।
अयोगवाहा विज्ञेया आश्रयस्थानभागिन इति च

शिक्षाकृदुक्तानि वेदितव्यानि । यद्यपि सर्व्वेषां वर्णानामुच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽप्यधिकमपेक्षित इति तन्मात्रामात्रकृतत्वेन वर्णानां वैलक्षण्यम् । जिह्वामूले तु कुः प्रोक्त इति पाणिनिशिक्षाभिधानात् कवर्गस्य कण्ठ्यत्वव्यवहारस्तु कण्ठशब्दस्य कण्ठमूलपरतया भाक्त एव तवर्गस्य दन्तमूलीयत्वेऽपि दन्त्यत्ववत् अन्यथा

भग्नदन्तस्य तदुच्चारानुपपत्तेः । जिह्वामूलीयस्य आश्रय-स्थानभागित्वेन तदाश्रयस्य कवर्गस्यापि जिह्वामूलस्थानत्वौचित्यम् । दन्त्योष्ठ्यो व इत्यत्रोभयोरेव प्रत्येकं वकारस्थानत्वं न तु समुदितयोः तथासति दन्तोष्ठ इत्येव निर्द्दिश्येत । अतस्तस्य दन्त्यौष्ठ्योभयकार्य्यनिमित्तता एवमग्रेऽपि द्रष्टव्यम् । यमानां प्रातिशाख्यप्रसिद्धानां कँादिचतुष्टयानां पूर्व्वोदितानां यमसंज्ञाबोधितानाञ्च नासिकापि स्थानमधिकमुपदिश्यते । तत्र च यमेत्युपलक्षणम् ।

"अमोऽनुनासिका न ह्रावि"इत्युक्त्या हकाररकारभिन्नानामनमानां नासिकास्थानत्वविधानात् नासामनुगतः स्थानत्वेनेत्यनुनासिक-शब्दव्युत्पत्त्यानासिकास्थानत्वप्राप्तेश्च । तत्र न ह्राविति पुनः हकार-रकारयोः पर्य्युदासः । "मुखनासिकावचनोऽनुनासिक" इति सूत्रे मुखपदस्य कण्ठादितत्तत्स्थानपरतया यमानामुभयस्थानत्वम् । अयोगवाहा विसर्गो जिह्वामूलीयोपाध्मानीययोरपि विसर्ग-विशेषरूपत्वेनाश्रयस्थानभागित्वम् । आश्रयस्थानभागित्वञ्च यमाश्रित्यैते उच्चार्य्यन्ते तत्स्थानभागित्वमतः विसर्गस्य कखयोः परयोर्जिह्वामूलोच्चार्य्यमाणयोराश्रयत्वेन तत्स्थानभागित्वात् जिह्वामूलीयरूपान्वितनामता समन्वेया । पफयोः परयो-रोष्ठोच्चार्य्यमाणयोराश्रयत्वेनोपाध्मानीयता । उच्च पश्च आध्मा-येते अनेन स्थानेनेति व्युत्पत्तेः उपाध्मानशब्द ओष्ठवचनः । तत्स्थानोच्चार्य्यत्वात्तथानामता चावधेया । अत एव । कौमुद्यां "जिह्वामूलीयस्य जिह्वामूलमुपाध्मानीयस्योष्ठौ" इत्युक्तम् ।

यद्यपि सर्व्वेषां वर्णानामाकाशस्थानत्वं करणत्वञ्च कण्ठादीनां तदुत्पत्तौ युक्तं, तथापि तेषां स्थानत्वव्यवहारो वर्णाभिव्यञ्जक-ताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वारोपेण भाक्त एव । तत्तत्स्थानेषु जिह्वाग्रादिसम्बन्धेन वर्णोत्पत्त्या जिह्वा-ग्रादिस्थिते तत्तत्सम्बन्धजनकप्रयत्नविशेषे आभ्यन्तरप्रयत्नवाच्ये स्पृष्टतादावेव करणत्वव्यवहारः समुचितः । वर्णाभिव्यक्त्यनन्तर-भाविनस्तु आन्तरतम्यपरीक्षोपयुक्ताः कण्ठविवरविकाशादे-रास्यवहिर्द्देशावच्छिन्नकार्य्यस्य जनका वाह्या प्रयत्ना गुणशब्दे-नोच्यन्ते इत्यादिकं शेखरादौ स्पष्टम् । आभ्यन्तरप्रयत्नास्तु वर्णोत्पत्तेः प्राग्भाविनो, वाह्यास्तु तदुत्पत्तेः पश्चाद्भाविन इति विवेकः । तथा हि नाभिदेशात् प्रयत्नप्रेरितः प्राणवायु-रूर्द्ध्वमाक्रमन्नुरःप्रभृतीनि स्थानान्याहन्ति उत्पादयति च ततो वर्णान् तदभिव्यञ्जकध्वनींश्च तत्र वर्णोत्पत्तेः प्राक् जिह्वाग्रो-पाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादिकं यदा सम्यक् स्पृशन्ति यदा स्पृष्टता प्रयत्नः, यदा ईषत् स्पृशन्ति तथा ईषत् स्पृष्टता, समीपावस्थाने संवृतता, दूरावस्थाने तु विवृतता इत्ये-वमाभ्यन्तरप्रयत्नभेदात् वर्णानां भेदाः । अत एव इचवर्गय-शानां तालव्यत्वाविशेषेऽपि चवर्गोच्चारणे कर्त्तव्ये तालुस्थानेन सह जिह्वाग्रादीनां सम्यक्स्पर्शः यकारोच्चारणे तु ईषत्-स्पर्शः शकारेकारोच्चारणे दूरसमीपावस्थानमिति । एतेषां चाभ्यन्तरत्वम् ओष्ठप्रभृतिकाकलीजनककाकलस्थानपर्य्यन्त-रूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शादिचतुष्टय-

रूपाभ्यन्तरकार्य्यकारित्वात् वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोध्यम् । विवारसंवारौ तु गलबिलस्य विकाशाविकाशात्मकौ वाह्यौ प्रयत्नौ विवृतसंवृताभ्यां भिन्नावेव तयोः समीपदूरावस्थानात्मकत्वादिति विवेक्तव्यम् ।

ते च आभ्यन्तराः प्रयत्नाः केषां वर्णानाञ्चे इत्येतत्तावदभिधीयते । कादिमावसानानां स्पृष्टता, अत एव तेषां सम्यक्स्पर्शवत्त्वेन स्पर्शपदवाच्यता । यरलवाम् ईषत्स्पृष्टता । तेषाञ्च स्पृष्टविवृतयोर्मध्यस्थितत्वेन लौकिकव्यवहारेष्वपि शसादीनां वर्गाणाञ्च मध्यस्थितत्वेन चान्तःस्थाशब्दवाच्यता । अन्तःस्था भिश्च संयुतमित्युक्तेरन्तस्थाशब्द आदन्तः । शषसहानाम् अचाञ्च विवृतता । शसहानान्तु ऊष्मशब्दाभिधेयवायुप्रधानत्वात् ऊष्मशब्दवाच्यता । अचाञ्च स्वयं राजमानत्वात् उदात्तादिस्वरवत्त्वाच्च स्वराभिधेयता । "अचः स्वयं विराजन्ते इत्युक्तेः"

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः ।

ह्रस्वो दीर्घः प्लुतश्चेति कालतो नियमा अचि

इत्युक्तेश्च । ह्रस्वस्य संवृतता ।

संवृतं त्वकमात्रं स्यात् विवृतन्तु द्विमात्रकम्

इत्युक्तेः ह्रस्वस्यैकमात्रतया प्रयोगे संवृतता, प्रक्रियायान्तु विवृततैव । तत्र मूलम्

अचोऽस्पृष्टा यणस्त्वीषत् नेमस्पृष्टाः शलस्तथा ।

शेषाः स्पृष्टा हलः प्रोक्ताः

इति शिक्षावाक्यमेव बोध्यम् । अत्राचः स्पर्शाभावरूप-

विवृतत्ववन्तः यणः यरलवास्त्वीषत्स्पृष्टा इत्यर्थः । नेम इत्यर्द्धवाची । शलः शसषहा नेमस्पृष्टा अर्द्धस्पृष्टा अर्थादर्द्धविवृताः ।

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्

इत्येकवाक्यत्वात् एते च स्थानप्रयत्नाः सवर्णसंज्ञायामुपयुक्ताः वाह्यप्रयत्नास्तु आन्तरतम्यपरीक्षायामेवोपयोगिन इति "तुल्यास्यप्रयत्नं सवर्ण" मिति सूत्रभाष्यादौ स्पष्टम् । तेन तकारस्थाने विवारश्वासघोषाल्पप्राणरूपवाह्यप्रयत्नसाम्येन चकारटकारादेश इति "स्थानेऽन्तरतम इति सूत्रे" स्पष्टम् बहुसमानधर्म्मत्वमेवान्तरम्ये हेतुरिति बोध्यम् ।

वाह्याः प्रयत्नाश्चाष्टविधाः काकलकाधःस्थलगलविलसङ्कोचविकाशश्वासोत्पत्तिर्ध्वनिविशेषघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्य्यकरा यथाक्रमं विवारसंवार श्वासनादघोषाल्पघोषाल्पप्राणमहाप्राणनामानो मन्तव्याः । प्रयत्नप्रेरितो वायुर्व्वर्णानभिव्यज्य यत्नविशेषेण गलविलविकाशादीनपि सम्पादयति अतो गलविलविकाशादिकरत्वादास्यवहिर्द्देशकार्य्यकरत्वात् चैते वाह्या इति । ते च

खयां यमाः खयः ꣳक ꣳपौ विसर्गः शर एव च ।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते ।
कण्ठमन्ये तु घोषाः स्युः संवारा नादभागिनः ।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः

इति । सिद्धान्तकौमुद्युक्तदिशावसेयाः । ये यमाः पूर्व्वोक्ताः

प्रातिशाख्यप्रसिद्धाः खयः शरः श्रपसहाय एते श्वासा अघोषाः कण्ठं विवृण्वते च। अन्ये एतद्भिन्नाः सर्व्वे वर्णा घोषसंवारनादरूपबाह्यप्रयत्नवन्तः। वर्गीयप्रथमतृतीयपञ्चमवर्णाः प्रथमतृतीयवर्गजातयमाश्च यणः एते अल्पप्राणास्तद्भिन्नाः सर्व्वे महाप्राणा इति विवेकः।

तथा उदात्तानुदात्तस्वरितरूपास्त्रिविधाः स्वरा ह्रस्वदीर्घप्लुतकालभेदाश्च स्वराणां विशेषाधाने हेतवो वेदितव्याः। तथा हि "विभागः पञ्चधा मत इत्युपक्रम्य"

स्वरतः कालतः स्थानात् प्रयत्नानुप्रदानत इति

स्वरकालस्थानप्रयत्नानुप्रदानाभिधेयबाह्यप्रयत्नान् वर्णविभाजकान् पञ्च सामान्यतो निर्द्दिश्य शिक्षाकृता।

"उदात्तश्चानुदात्तश्चेत्यादिना" अत्रैव स्वरकालयोर्व्विभाजकताभिहिता। तत्र ताल्वादिषु स्थानेषूर्द्ध्वभागे निष्पन्नोऽनुदात्तः, तत्रैव नीचैरुच्चार्य्यमाणोऽनुदात्तः प्रथममर्द्धमुदात्ततयोच्चार्य्य-उत्तरार्द्धमनुदात्ततयोच्चार्य्यमाणः स्वरितः इति "उच्चैरुदात्तः नीचैरनुदात्तः समाहारः स्वरितः तस्य आदित उदात्तमर्द्धह्रस्वमिति" पाणिनिसूत्रजातेभ्यः।

तदेवं परस्परविभाजकस्थानबाह्याभ्यन्तरप्रयत्नस्वरकालकृतविशेषात् वर्णानां परस्परविशेषरूपता। सर्व्वे हि वर्णाः पुरस्कृत्यैव किञ्चित् कारणविशेषं स्वरूपविशेषताभाजो भवन्तीति तद्विशेषश्च सूचीपत्रे द्रष्टव्यः।

एवमुक्तवर्णसमुदायात्मकं सुप्तिङन्तरूपं पदं पदकदम्बात्मकं

परस्परसाकाङ्क्षं क्रियाप्रधानं वाक्यमिति सिद्धान्ते स्थिते वाक्यादर्थावगतिर्भवति न वेति तावत् विचिन्त्यते। तत्र सर्व्वो हि प्रतिपादयिता प्रतिपिपादयिषितमर्थं प्रतिपादयितुं नियोज्यं प्रति पूर्व्वोक्तरीत्या वर्णोत्पादनेन महतायासेन लोके वाक्यं विरचयन्नुपलभ्यते नियोज्यश्च तद्वाक्यश्रवणसमनन्तर-मेव तत्तत्कार्य्यं संपादयति। तत्र यदि वाक्यस्य किञ्चिदर्थ-बोधकता न स्यात् न स्याच्च तदा विश्वजनीना वाक्यरचनायां, तच्छ्रवणाद्वा किञ्चित्कार्य्यकरणे प्रवृत्तिः प्रवर्त्तते च तत्र तत्र वक्ता श्रोता च। ततश्च प्रेक्षावत्प्रवृत्तेरन्यथानुपपत्त्या वाक्य-स्यैव कश्चित् धर्म्मविशेषोऽर्थावगतिहेतुभूतोऽनुमेयः। तथा हि केनचित्-घटमानयेति नियोज्यपुरुषं प्रत्युपदिष्टे तत् शृण्वन् नियोज्यः घटानयने प्रवर्त्तते इति तत्प्रवृत्तिसूचकतच्चेष्टा-दर्शनेन पार्श्वस्थानामेवमनुमितिरुदेति यथा पुरोवर्त्तिपुरुषस्या-गन्तुकघटानयनप्रवृत्त्यन्यथानुपपत्त्या प्रवृत्तिं प्रतीष्टसाधनता-दिधियः कारणत्वस्यान्यत्र क्लृप्तत्वेन निश्चयात् तद्धीजननकारण-मवश्यमत्रास्तीति। तत्र च इतरकारणाननुसन्धानात् उपस्थित-त्वाच्च घटमानयेति वाक्यस्यैव तत्कारणत्वमध्यवस्यति। स च बोधः तत्तद्विषयेषु इन्द्रियसन्निकर्षाभावेन व्याप्तिपक्षधर्म्मतादि-ज्ञानाभावेन च प्रत्यक्षादिभिन्नः अन्वयबोधपदाभिधेयः शाब्द एवेत्यवसेयः। विशिष्टबोधस्य अनुभवसिद्धत्वात् न स्मरणरूपः स्मरणस्य समानविषयानुभवसंस्कारप्रभवत्वेनाऽभिनवकाव्य-प्रबन्धादौ वाक्यार्थबोधानुपपत्तेरित्यन्यत्र विस्तरः।

अथ तद्बोधोदयप्रकारः प्रदर्श्यते। तत्र प्रथमं शब्दश्रवणादनन्तरं श्रोतुरात्मनि समुपस्थीयते तत्तदर्थैः उदीयते च योग्यतादिवशेन ततस्तेषां परस्परं विशिष्टान्वयबोधेन। उपस्थितिश्च स्मृतिरेव स्मृतिर्हि लोके अनुभूतपदार्थस्य उद्बोधकसहकृतसंस्कारेण जायमाना दृश्यते तत्र उद्बोधकस्यान्यस्यानुपलम्भात् शब्दश्रवणस्यैव तत्संस्कारोद्बोधे हेतुता कल्प्यते एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकताया अन्यत्र दर्शनात् शब्दार्थयोरपि परस्परं सम्बन्धित्वमवसीयते अवसीयते च तस्यैव संस्कारोद्बोधकत्वम्। तथा च यदि शब्दानां पदार्थैः सह सम्बन्धो न स्यात् न स्याच्च तदा शब्देभ्योऽर्थानां स्मृतिः स्मर्य्यन्ते ह्यर्थाः शब्दैरिति। अत एव।

सति प्रत्ययहेतुत्वे सम्बन्ध उपपद्यते।

शब्दस्यार्थैर्यतोऽतस्तत्सम्बन्धोऽस्तीति गम्यते इति।

वाक्यपदीये प्रत्ययहेतुत्वान्यथानुपपत्त्यैव तयोः सम्बन्धसद्भावानुमानम्।

स च सम्बन्धो वृत्तिरूपः। वृत्तिश्च द्विविधा शक्तिर्लक्षणा च तत्र शक्तिर्नाम इतरेतराध्यासमूले अभेदे सति तद्बोधहेतुत्वमिति मञ्जूषायामुक्तम्। "स्थितोऽस्य वाचकस्य वाच्येन सहाभेदः सम्बन्धः" इति पातञ्जलसूत्रभाष्ये व्यासचरणैरेवमेवाभाणि च। तथा शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्कर इति तत्सूत्रेऽपि व्यासैरेव स्फोटरूपपदस्य सङ्केतबुद्धितो विभागमभिधाय सङ्केतव्युत्पादनाय "सङ्केतस्तु पदपदार्थयोरितरेतराध्यास

रूपः स्मृत्यात्मकः योऽयं शब्दः सोऽर्थः योऽयमर्थः स शब्द इत्यादिना" शब्दार्थयोरभेदरूपत्वं सङ्केतस्य सङ्कीर्त्तितम् अत्र स्मृत्यात्मकः पाणिन्यादिस्मरणात्मकस्तदनुशासनबोध्य इति यावदिति व्याख्यातञ्च मञ्जूषाकारेण।

स च सम्बन्धः नित्य एव "औत्पत्तिकस्तु शब्दार्थयोः सम्बन्धः" इति जैमिनिसूत्रात्।

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथेति।

वाक्यपदीयाच्च। युक्तञ्चैतत् शब्दानां ब्रह्माभिन्नतया ब्रह्मकार्य्यत्वात् जगतः शब्दाभिन्नता कार्य्यकारणयोरभेदात् उक्तञ्च।

अनादिनिधनं ब्रह्म शब्दतत्त्वं प्रचक्षते।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यत इति

वाक्यपदीये। श्रुतिरपि "ओंकार एवेदं सर्व्वमित्यादिः शब्दविशेषरूपौङ्कारस्य सर्व्वपदार्थरूपतां प्रतिपादयति। शारीरकसूत्रे च "शब्द इति चेन्नातः प्रभवात्" इत्यादौ भाष्यकारेण शब्दप्रभवत्वं देवादीनामपि निरणायि। तथा तत्रत्यभाष्यधृता स्मृतिरपि।

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्व्वाः प्रवृत्तय इति।
नाम रूपञ्च भूतानां कर्म्मणाञ्च प्रवर्त्तनम्।
वेदशब्देभ्य एवादौ निर्म्ममे स महेश्वर इति च

मनुरपि।

सर्व्वेषाञ्च स नामानि कर्म्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्म्ममे इति।

शब्दविशेषात्मकवेदानां जगत्कारणत्वं बोधयति। शब्दानामर्थ-हेतुत्वञ्च नोपादानकारणत्वं सर्व्वेषामेव ब्रह्मोपादानत्वात् किन्तु नित्ये शब्दे नित्यार्थसम्बन्धिनि सर्व्वव्यवहारयोग्यार्थनिष्पत्ति-हेतुत्वमेव, सर्व्वेषां वाचारम्भणश्रुत्या वाङ्मात्रविलम्बितत्वादित्यपि तद्भाष्ये द्रष्टव्यम्। लोके हि अपूर्व्वपदार्थजातं विरचयन् तदभिवाचकशब्दमेव प्रथमं मनसि अनुध्यायति रचयति च ततस्तमर्थमिति लोकानुसारिणी शब्दार्थयोः पूर्व्वापरीभा-वेनावस्थित्यैव कार्य्यकारणरूपता-व्यवस्था। वेदेऽपि "स भूरिति व्याहरन् भुवमुदसृजत्" इत्यादौ तथैव। तथा

एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ।
प्रकाशकः प्रकाश्यञ्च कार्य्यकारणरूपतेति

वाक्यपदीये प्रकाश एव कार्य्यं कार्य्यकारणरूपता शब्दा-र्थयोर्द्दर्शिता। तथा

शब्दोऽप्यभिजल्पत्वमागतो याति वाच्यतामिति।

वाक्यपदीये अभिजल्पत्वरूपाध्यासेनैव वाचकस्य वाच्य-रूपत्वप्राप्तिमभिधाय।

सोऽयमित्यभिसम्बन्धाद्रूपमेकीकृतं यदा।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते।

इत्यभिजल्पशब्दनिर्व्वचनेन स्पष्टमभेदरूपत्वं प्रतिपादितम्। तथा

लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्त्तते इति।

वाक्यपदीये अर्थरूपत्वाप्राप्त्या शब्दप्रवृत्त्यभावो व्यतिरेकेण प्रदर्शितः। प्रतिपादितञ्च शारीरिकभाष्यकारैरर्थानामादिमत्त्वेऽपि तदाकृतीनामनादितया तत्रैव सम्बन्धस्वीकारेण सम्बन्धनित्यत्वम्। परिहृतञ्च देवदत्ताद्याधुनिकशब्दानामाकृतिषु सम्बन्धस्वीकारेण विरोधादिकम्। आकृतिश्च जात्युपाधिरूपाया ब्रह्मसत्तायाः सम्बन्धविशेष इत्याकारे स्फुटम्। अत एव

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्।

अकृत्रिमोऽभिसम्बन्धो डित्यादिषु गवादिवदिति।

वाक्यपदीये संज्ञाशब्दानामपि आकृतिनित्यत्वाभिप्रायेण सम्बन्धस्य अकृत्रिमत्वमभिहितमभिहितञ्च जात्यादेर्ब्रह्मरूपत्व'तत्रैव

सम्बन्धभेदात् सत्तैव भिद्यमाना गवादिषु।

जातिरित्युच्यते तस्यां सर्व्वे शब्दा व्यवस्थिताः।

तां प्रादिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते।

सा नित्या सा महानात्मा तामाहुस्त्वतलादय इति।

प्रतिपादिता च तत्रैव अनेकव्यक्तीनामनित्यतया जातेरैकरूप्यात् स्फोटात्मशब्दवाच्यता। यथा

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता।

कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिता इति।

अत्र च जातिस्फोटयोः सामानाधिकरण्यनिर्द्देशात् वाच्यवाचकयोरभेदः स्रुपपादित इति। तयोरभिन्नत्वेऽपि क्वचिदेव

शब्दस्य प्राधान्येनोपस्थितिः क्वचिच्चार्थानामित्यत्र तात्पर्य्यादिकमेव नियामकम् । तथा हि विष्णुमुच्चारयेत्यादौ घटोऽस्तीत्यादौ च शब्दार्थयोरभिन्नतयोपस्थित्यऽविशेषेण बोधापत्तावपि तात्पर्य्यादिवशादेकत्र शब्दस्यान्यत्रार्थस्य प्राधान्येनैव बोधः । तथैवोक्तं वाक्यपदीये

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिवाभाति सर्व्वं शब्देन भासते इति ।
ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा ।
तथैव सर्व्वशब्दानामेते पृथगवस्थिते इति च ।
शर्व्व शब्दानां प्रदीपादिवत् स्वयं प्रकाशनमभिधाय ।
तयोरपृथगर्थत्वे रूढेरव्यभिचारिणि ।
किञ्चिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठत इति ।

शब्दार्थयोर्मध्ये क्वचिदेव किञ्चिद्रूपस्य शब्दस्यार्थस्य वा प्राधान्येनोपस्थितिरित्युक्तम् । तयोस्तु आध्यासिकाभेदवत्त्वेऽपि तात्त्विकभेदवत्त्वात्तस्य "वाचकः प्रणव" इति पातञ्जलसूत्रप्रयोगो द्रष्टव्यः ।

एवं शक्तिर्निरूपिता । लक्षणा तु शक्यसम्बन्धरूपा सा च स्वप्रतियोगिशक्तत्वेन शब्दनिष्ठा तस्याञ्च शक्यार्थान्वयबोधे तात्पर्य्याभावादिकं कारणमिति सिद्धान्तविदः । तथा हि प्रथमं शक्यार्थोपस्थितौ तद्विषयकविशिष्टान्वयबोधे तात्पर्य्यविरहबाधाद्यनुसन्धाने सन्निहिते श्रुतशब्दस्यैव तद्बोध्यार्थसम्बन्धिनि लक्षणा कल्प्यते । यथा गङ्गायां घोषः इत्यादौ गङ्गापदात् गङ्गाप्रवाहरूपे शक्यार्थे उपस्थिते घोषाद्यधिकरण-

तान्वये बाधाद्यनुसन्धानात् तत्पदस्यैव गङ्गाप्रवाहसम्बन्धिनि तीरादौ लक्षणा कल्प्यते, काकेभ्यो दधि रक्ष्यतामित्यादौ च शक्यार्थान्वये तात्पर्य्यविरहाद्यनुसन्धानादेव काकाकाकसाधारणरूपे शक्यसम्बन्धिनि क्वचिदर्थे लक्षणेति विवेकः। यद्यपि शक्तेरपि शक्याभेदसम्बन्धरूपतया तत्रातिप्रसङ्गः तथापि तत्सम्बन्धभिन्नसम्बन्धस्यैव लक्षणात्वस्वीकारात् न दोषः। तादृशसम्बन्धानाञ्च बहुलतया सादृश्यरूपत्वे लक्षणाया गौणीत्वेन व्यवहारः इत्यन्यत्र विस्तरः। शक्तिलक्षणयोर्द्वयोरपि वृत्त्योर्ज्ञापकं व्याकरणमेव।

शक्तिग्रहं व्याकरणोपमानादित्यादिवक्ष्यमाणशक्तिग्राहकवचनात्। लक्षणाया व्याकरणाद्यधीनज्ञानत्वे अनुपपत्तिज्ञानाधीनत्वाभावे च निरूढत्वं तद्भिन्नत्वे च आधुनिकत्वमिति विवेकः।

एवं शक्तिलक्षणान्यतरवृत्तिरूपसम्बन्धज्ञानाधीनायामर्थोपस्थितौ सत्यां योग्यतादिवशेन विशिष्टार्थबोधः समुदेति तत्र च आकाङ्क्षायोग्यतासत्तयो हेतवः। तत्र आकाङ्क्षा नाम शब्दनिष्ठा पूर्व्वपूर्व्वपदविशिष्टोत्तरोत्तरपदत्वरूपा यत्पदश्रवणे यत्पदश्रवणं विना न बोधः तत्पदस्य तत्पदेनाकाङ्क्षेति फलितम्। यथा घटमिति कारकपदश्रवणे क्रियापदश्रवणेन विना बोधाभावः। अतः क्रियापदश्रवणेच्छारूपा आकाङ्क्षा एवं क्रियापदश्रवणेऽपि कारकपदस्येति तयोः परस्परमाकाङ्क्षा, एतज्ज्ञापकतयैव व्याकरणोपयोगः। तथा हि "कारके" इत्यधिकृत्य

द्वितीयादयो विहिताः कर्त्तृत्वादिव्यपदेशकारकत्वेन क्रियामधिकृत्यैव “कर्म्मणि द्वितीये” त्यादीनां विधानात्। उक्तञ्च। वाक्यपदीये।

गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्त्तते।

साध्यत्वेन निमित्तानि क्रियापदमपेक्षते इति।

योग्यता च यत्पदार्थे यत्पदार्थस्य बाधाभावस्तत्पदार्थे तत्पदार्थस्य योग्यता यथा पर्व्वते वह्निरित्यादिवाक्ये पर्व्वतपदार्थे वह्नेर्बाधाभावः ह्रदे च बाधः इति तत्र तत्र योग्यतायोग्यते। आसत्तिश्च यत्पदार्थे यत्पदार्थस्य योग्यता तत्पदार्थोपस्थित्यव्यवधानेन तत्पदार्थोपस्थितिरूपा घटमानयेत्यादौ घटकर्म्मताया अन्वययोग्यस्य आनयनपदार्थस्य तदव्यवधानेनोपस्थितिस्तथानुपस्थितिश्च अग्निमान् देवदत्तोगिरिर्यातीत्यादौ। अत्र अग्निसम्बन्धस्य गिरावेवान्वययोग्यतया यानकर्तृत्वस्य देवदत्तादौ तथात्वेन च तदुपस्थापकपदयोरव्यवधानाभावेन पदार्थयोरपि नाव्यवधानोपस्थितिः। तात्पर्य्यमपि तद्बोधे हेतुः तच्च तद्बोधेच्छयोच्चरितत्वरूपं पदनिष्ठम्। सैन्धवमानयेत्यादौ भोजनप्रकरणादिज्ञाने लवणबोधेच्छयोच्चरितत्वेन सैन्धवपदज्ञानात् लवणपदार्थोपस्थितिरिति केचित्। प्रकरणादिज्ञानमेव तद्बोधे हेतुरिति तु नव्याः। तथा च नानार्थानां शब्दानां प्राकरणिकाप्राकरणिकार्थयोरुपस्थापकत्वाविशेषेऽपि प्रकरणादिज्ञानमेव अप्राकरणिकार्थोपस्थितौ प्रतिबन्धकं तथा च वाक्यपदीयम्।

अनेकार्थाभिधाने च संयोगाद्यैर्नियन्त्रिते ।
शब्दार्थानामवच्छेदात् विशेषस्मृतिहेतव इति ।

अनेकार्थाभिधाने अनेकार्थोपस्थापने संयोगाद्यैः प्रकरणै-र्नियन्त्रिते प्रतिरुद्धे सति शब्दार्थानाम् अप्राकरणिकार्थानाम् अवच्छेदात् उपस्थापनप्रतिरोधात् विशेषस्य प्राकरणिकार्थस्य स्मृतावुपस्थितौ हेतवो नानार्था इति शेषः इति तदर्थः ।

एवमाकाङ्क्षादिसचिवाद् वृत्तिरूपसम्बन्धज्ञानसहकृताच्च शब्दादर्थावगतिरित्येवं निरूपिते इदानीं कीदृशस्य शब्द-स्यार्थसम्बन्धित्वमिति तावदभिधीयते । तत्र वर्णानां प्रत्युच्चा-रणमन्यथाप्रतीयमानतया अनित्यत्वेन आशुविनाशिनाञ्च तेषां मेलनासम्भवेन तत्समुदायस्यापि सम्बन्धित्वाभावेन प्रत्येकं वर्णेषु वृत्तौ व्यभिचारेण च पूर्व्वपूर्व्ववर्णाहितसंस्कारवीजवति अन्त्यवर्णजनितपरिपाकशालिनि हृदये झटिति समुदीय-मानस्य स्फोटरूपस्यैव शब्दस्य नित्यतया तत्रैव नित्यसम्बन्धस्य योग्यतया वृत्तिमत्त्वमुचितमित्याकरे स्पष्टम् । तथा हि वर्णा यदि वाचकाः स्युः स्यादेव तेभ्यो व्यस्तेभ्योऽप्यर्थावगतिः । न च तथा प्रत्येकं वृत्तिमत्त्वाभावेन तत्समुदायस्य वृत्तिमत्त्वं सुदूरपरा-हतम् । प्रत्येकावृत्तेः समुदयावृत्तित्वनियमात् आशुवि नाशिनां वर्णानां मेलनासम्भवेन तत्समुदायत्वज्ञानासिद्धेः पूर्व्वपूर्व्ववर्णाहितसंस्कारसहितस्य चरमवर्णानुभवस्य वोधक-त्वन्तु सम्भावितमपि दिनान्तरीयतादृशसंस्कारानादाय वर्त्तमानचरमवर्णमात्रानुभवेन अर्थावगत्यापत्त्या निरासि-

तम् । अन्त्यवर्णपर्य्यन्तानामनुभवानन्तरं समुदायानां संस्कारोदयकल्पनया पुनः समुदितवर्णानां स्मरणात्मकज्ञानतोऽर्थावगतिरित्यपि न सङ्गतं जारा राजेत्यादावविशेषेण तत्तद्वर्ण संस्कारसद्भावादुभयवैलक्षण्यानुपपत्तेः अतोऽवश्यं वर्णातिरिक्तोऽन्त्यवर्णानुभवव्यङ्ग्यः स्फोटनामा शब्दः स्वीकार्य्यः स्फुटति प्रकाशतेऽर्थोऽनेनेति व्युत्पत्त्या च तस्य सार्थकनामता बोध्या। समर्थितश्चैष एव पक्षः पातञ्जलभाष्ये व्यासचरणैः । "तदेतेषामर्थसङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य संकेत्यते तदेकं पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तमभागमक्रममवर्णं बौद्धमन्त्यवर्णप्रत्ययोपस्थापितं प्रतीयते" इत्यन्तेन । अत्र चानेकवर्णानां शक्ततावच्छेदकतापेक्षयैकस्यैव जातिरूपस्फोटस्य शक्ततावच्छेदकत्वकल्पने लाघवमपि द्रष्टव्यम् । उक्तञ्च शब्दकौस्तुभे वोपदेवचरणैः ।

शक्यत्व इव शक्तत्वे जातेर्लाघवमीच्यताम् ।
औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवदिति ।
शृणोति य इमं स्फोटं सुप्ते श्रोत्रे च शून्यदृक् ।
येन वाक् व्यज्यते यस्य व्यक्तिराकाश आत्मन इति ।

मञ्जूषाधृतभागवतवचनेऽपि स्फोटात्मकशब्दश्रवणस्यात्मलिङ्गतोक्त्या स्फोटरूपशब्दोऽर्थायात इत्यवगन्तव्यम् । हरिवंशेऽपि

अक्षराणामकारस्त्वं स्फोटस्त्वं वर्णसंश्रय इति ।

स्फोटस्य व्यञ्जकवर्णाश्रयत्वमभिहितम् । एतन्मताभिप्राये-

एव "स्फोटमित्याहेति" शारीरकसूत्रे तद्भाष्ये च स्फोटव्युत्पादनम् "वर्णा एवेति भगवानुपवर्षः" इति निराकरणन्तूपवर्षग्रहणात् तन्मताभिप्रायेण। "न स्फोटः प्रतीत्यप्रतीतिभ्यामिति" सांख्यसूत्रेऽपि स्फोटखण्डनमुपवर्षमताभिप्रायेणेति सर्व्वं सुस्थम्। स च स्फोटो वर्णपदादिभेदेन अनेकविधो वाहुल्यभयात् न प्रपञ्चितः।

तस्य स्फोटस्याभिव्यक्तौ प्राकृतस्य ध्वनेः कारणत्वं चिरचिरतरस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनेरिति विवेकः। तथा च वाक्यपदीये

स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते इति।

स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते इति च

स्थितिभेदे चिरचिरतरकालस्थितौ। ध्वनिस्तु पूर्व्वलक्षितः। तस्य च स्फोटस्य नित्यतया ध्वनिगतह्रस्वदीर्घादिकालस्य तत्रोपचारः। प्रतिपादितञ्च तथैव वाक्यपदीये

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः।

स्वभावतस्तु नित्यत्वात् ह्रस्वदीर्घप्लुतादिषु।

प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्य्यते।

शब्दस्य स्फोटस्य नित्यतया अभिन्नकालस्य ह्रस्वदीर्घादिषु प्राकृतध्वनेः कालः तारत्वादिधीहेतुरित्युपचर्य्यते इति तदर्थः। एवञ्च विलम्बितोच्चारणस्थले तत्तद्वर्णानां तद्बोधजनितसंस्काराणां वा बहुक्षणापर्य्यन्तस्थायित्वकल्पनामपेक्ष्य एकस्यैव शब्दस्याभिव्यक्त्यनन्तरं जायमानेन वैकृतेन ध्वनिना

बहुकालस्थितिकल्पने लाघवमित्यपि द्रष्टव्यम्। भेरीशब्दादौ च ध्वन्यभिव्यक्त्यनन्तरं जायमानप्राकृतध्वनेर्बहुकालस्थायित्वदर्शनेन अत्रापि तथा कल्पनौचित्यात्। अत एव च महाभाष्ये "एवं तर्हि स्फोटः शब्दो ध्वनिः शब्दगुणः" इत्यादिनाऽभिव्यक्त्युपकारकत्वेन ध्वनेः स्फोटरूपशब्दगुणत्वमभिहितमभिहितञ्च ध्वनेर्ह्रस्वदीर्घत्वेनापि भानम्। यथा

ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
ह्रस्वो महांश्च केषाञ्चित् स्वयं नैव स्वभावत इति।

स्वभावतस्तद्रूपेण स्फोटो न लक्ष्यत इत्यर्थः। ध्वनिविकारे च वायुसंयोगविशेषस्य हेतुत्वं तस्य बहुकालस्थायित्वे विलम्बितत्वमल्पकालस्थायित्वे द्रुतत्वमिति विवेकः।

एवं बहुविधेषु स्फोटेषु वाक्यस्फोटस्यैव सिद्धान्ते निष्कृष्टतया तस्यैव बोधकत्वं तद्घटकपदानान्तु पदमध्यवर्त्तिवर्णवत् निरर्थकत्वं विशिष्टार्थद्योतनायैव तेषां प्रयोगात्। तथा च

ब्राह्मणार्थो यथा नास्ति कश्चित् ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युर्निरर्थका इति।
पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चनेति च

वाक्यपदीये पदाद्यसद्भावं दर्शयति। तथा

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिरिति

हरिकारिकायां सिद्धान्ते वाक्यस्फोटस्यैव सिद्धिरिति प्रतिपादितम्।

एवं स्फोटरूपशब्दस्यैव बोधकत्वे स्थिते इदमिदानीं निरूप्यते किं साधूनामेव बोधकत्वमुतासाधूनामपीति। तत्र साधूनामिवासाधूनामपि बोधकत्वं सिद्धान्तसिद्धम्
"समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शब्देन धर्म्मनियमः"
इत्युक्तेः। तथा हि प्रथमं व्यवहारेणैव शक्तिग्रहस्य जायमानत्वात् व्यवहारस्य च प्रायेणापशब्दगर्भतया गाव्यादिशब्दादिष्वेवापभ्रंशेषु शक्तिग्रहः न साधुषु बालस्याव्युत्पन्नस्य प्रायशः साधुशब्दव्यवहारानभिज्ञत्वात्। सर्व्वे हि लोका बाल्यमारभ्यामरणान्तं संस्कृतभाषामजानन्तोऽपि देशभाषया वाक्यादिकं विरचयन्ति जानन्ति च प्रयोजकप्रयुक्तापशब्दार्थम्, इतरथा तच्छ्रवणादिष्टानिष्टादौ न स्यातां प्रवृत्तिनिवृत्ती, जायेते च ते सर्व्वेषामिति, व्यवहारानुरोधिनी तथा कल्पना। न च तेषां तन्मूलसाधुशब्दस्मरणादेवार्थबोधकत्वमिति वाच्यं स्मरणस्य पूर्व्वानुभवजन्यतया बालानां तदनुभवाभावात्। नापि पदार्थोपस्थितिमात्रमसाधुभ्यः कल्प्यम् असाधूनां हि साधुमूलकत्वेन शक्तसम्बन्धित्वेन स्मारकत्वौचित्यादिति वाच्यं विशिष्टानुभवस्यानुभवसिद्धत्वात् प्रवृत्त्यादिकार्य्यं प्रति विशिष्टबोधस्यैव हेतुत्वात् व्यवहर्त्तॄणां प्रवृत्त्यादिदर्शनाच्च। अतोऽवश्यमुभयविधानामपि बोधकत्वं स्वीकार्य्यम्। अत एव हरिणा

असाधुरनुमानेन वाचकः कैश्चिदिष्यते।

इत्येकीयमतमुपन्यस्य।

वाचकत्वाविशेषे वा नियमः पुण्यपापयोः।

इत्युभयविधानामपि बोधकत्वं व्यवस्थापितम्। एवञ्चान्वय-व्यतिरेकाभ्यां श्रुतशब्दस्यैव बोधकत्वे स्थिते प्रयोगमध्यगता एव तिविसर्गादयो वाचका न तु तत्स्मारितसुलकारादयः तद-जानतोऽपि ततो बोधोदयात् व्याकरणभेदेन स्थानिनां वि-भिन्नतया तेषां बोधकत्वानिर्द्धारणात्। एवञ्च "लः कर्म्मणि" इत्यनुशासनमपि स्थानिनामादेशसमानार्थकतया तदभिन्नतया च तिबादिस्थितवाचकताशक्तिं तत्स्थानित्वेन कल्पिते लका-रादावारोप्यैव परं प्रवृत्तमिति द्रष्टव्यम्। सिद्धान्ते तु प्रकृति-प्रत्ययादीनां निरर्थकतया परमतादरणेनाभ्युपगमवादेन वा तथा विचार इति विवेकः।

अथ वाक्यस्य वाचकत्वप्रसङ्गात् तच्छक्तिग्रहोपाया अपि प्रदर्श्यन्ते। तत्र सर्व्वेषां शब्दानां प्रथमतो व्यवहारादेव प्रायशः शक्तिग्रहः। तथा हि केनचित् वृद्धेन व्युत्पन्नं पुरुषं प्रति गामानयेत्युपदिष्टे तत् शृण्वन् व्युत्पन्नो गवानयने प्रवर्त्तते। तच्चेष्टादर्शनेन तत्प्रवृत्तिमनुमाय व्युत्पित्सुर्बालो व्युत्पन्नपुरु-षस्य प्रवृत्त्यन्यथानुपपत्त्या तद्धेतुभूतकर्त्तव्यतादि—ज्ञानादिकं तत्रानुमिनुते, अनुमिनुते चापरकारणानुपस्थितेः श्रुतस्यैव समु-दितवाक्यस्य तद्धीजनकत्वम्। ततश्च वाक्यस्य तद्धीजनकत्वेन तत् सम्बन्धित्वमवसीयते। इति तत्सम्बन्धविशेषस्य पूर्व्वोक्ताभेद-रूपस्य शक्तितया व्यवहारस्यैवं शक्तिग्राहकत्वमित्येवमवसीयते शास्त्रकारैः। पश्चाच्च पदानामन्वयव्यतिरेकाभ्यां प्रत्येकपद-शक्तिग्रहः। तथा हि पुनश्च गां बधान घटमानयेत्यादिपदश्रवणे

नियोज्यस्य पूर्व्वापेक्षया विशेषकार्य्ये प्रवृत्तिदर्शनेन गवादिपद-श्रवणसत्त्वे तत्कार्य्यकरणं तदभावे च तत्कार्य्याकरणमित्यन्वय-व्यतिरेकाभ्यां तत्तत्पदानां विशेषार्थवाचकत्वावधारणमिति द्रष्टव्यम्। ते चोपाया अभियुक्तोपदिष्टा वेदितव्याः। यथा

शक्तिग्रहं व्याकरणोपमानात् कोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषात् विवृतेर्व्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाइति।

व्याकरणं हि "कर्म्मणि द्वितीया" इत्यादिना द्वितीयादीनामर्थ विशेषे प्रयोगनियमाय प्रवृत्तं द्वितीयादीनामर्थमप्यवगम-यति। तथा हि कर्म्मण्येव द्वितीया शक्ता न करणादौ, कर्म्मणि द्वितीयैव शक्ता। न तृतीयेत्येवं द्विविधनियमपरतया प्रवृत्तं शास्त्रं नियमतदतिक्रमयोः पुण्यापुण्यफले दर्शयत् तत्तच्छब्दानां तत्तदर्थेष्वेव साधुतोक्त्या शक्तिमवगमयति। तदुक्तं भाष्यकारैः।

सुपां कर्म्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु चेति।

उपमानमपि शक्तिग्राहकम्। यथा गोसदृशो गवय इत्यति-देशवाक्यं श्रुतवतो ग्रामस्थपुरुषस्य वनगमनादनन्तरं गोसदृश-पिण्डदर्शनेनातिदिष्टं तद्वाक्यं स्मरतश्च अयं पिण्डो गवयपद-वाच्य इति भवति मतिरित्युपमानरूपातिदेशवाक्यस्य गवय-पदशक्तिग्राहकत्वम्। तत्र च व्याकरणादीनामप्रवृत्तेः प्रकृति-प्रत्ययाधीनोपस्थितिविषये एव व्याकरणस्य, रूढिविषये च कोषस्योपयोगात्तदभावादेतस्यैव तथात्वौचित्यादिति द्रष्टव्यम्। वक्ष्यमाणलक्षणकोषोऽपि अनपेक्ष्यैव प्रकृतिप्रत्ययादिविभागं

केषाञ्चित् पदजातानां रूढिज्ञानाय प्रवर्त्तमानो मण्डप-घटादिशब्दानां शक्तिमवगमयति। आप्तवाक्यमपि तथेति व्याकरणादिशक्तिधीहेत्वज्ञानेऽपि यथार्थज्ञानवतामुपदेशेन तत्तच्छब्दानां तत्तदर्थेषु शक्तिग्रहः। व्यवहारतस्तु दर्शितः। वाक्यशेषोऽपि तद्ग्रहे हेतुः यथा "स्वर्गकामो यजेत" इत्यादौ श्रुतस्वर्गपदस्य अर्थविशेषमजानतामधिकारिणां तच्छक्तिबोधनाय प्रवृत्तेन।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत् सुखं स्वःपदास्पदम्॥

इति वाक्यशेषब्राह्मणेन दुःखासंभिन्नत्वादिमति सुखविशेषे एव स्वर्गपदस्य शक्तिग्रहः। व्याख्यानरूपा टीकादिपदाभिधेया विवृतिरपि तत्तच्छब्दानां तत्तदर्थेषु शक्तिं ग्राहयति। यथा पचतिपदस्य पाकं करोतीति व्याख्या पाककर्त्तर्य्येव शक्ति-ग्राहिका। प्रसिद्धपदसामानाधिकरण्यमपि तद्ग्रहे हेतुः। पिकादिशब्दार्थमविदुषामुपदेशाय प्रवृत्तेन सहकारतरौ मधुरं रौति पिक इति वाक्येन प्रत्येकशक्त्या ज्ञातशक्तिकपदोपस्थापि-तार्थे मधुरशब्दकारके पिकशब्दस्य शक्तिग्रहः। एवं कोषादावपि

सत्कृत्यालङ्कृतां कन्यां यो ददाति सकूकुदः

इत्यादौ प्रसिद्धपदोपस्थापितार्थे सत्कारपूर्व्वकालङ्कृतकन्या-दातरि कूकुदपदस्य शक्तिग्रहः। अत्र च प्रसिद्धपदसान्निध्यं नाम अर्थविशेषे निश्चितशक्तिकपदसामानाधिकरण्यं सामा-नाधिकरण्यञ्च स्वबोध्यार्थेऽभेदेनान्वयबोधजनकत्वम्। उपपाद-

यिष्यते साक्षात्प्रथमान्तार्थयोरभेदेनान्वयः। अतो नहुरं रौति, कन्यां ददातीत्यादावाख्यातस्य प्रथमान्तसामानाधिकरण्यं सुलभमेव। अत एव च भाष्ये "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रे अप्रथमान्तसमानाधिकरणे इति निर्देशादस्यैव लटः प्रथमान्तसामानाधिकरण्यमुपपादितमुपपादितञ्च "आदेशे सामानाधिकरण्यं इष्टाऽनुत्तानाद्दृत्यर्थं प्रकृतेः सामानाधिकरण्यम्" इत्यादिना लटः स्थानिलकारस्यानान्यस्य प्रथमान्तसामानाधिकरण्यम्। एवं सति "ददानः कुक्कुरः क्रूरः" इत्यादिपाठकल्पनमपि परेषामनादेयमेवेति दिक्।

व्यवहारादेव प्रथमं शक्तिग्रहे व्याकरणादीनां कथमुपयोग इत्यत्र तावदभिधीयते। तत्र च वार्त्तिककारः शास्त्रस्य नियमविधिपरतया सार्थक्यमाह। यथा "सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः" इति। यथा लौकिकेषु प्रयोगेषु लोकादेव प्रथमं व्युत्पत्तिः अव्युत्पन्नं प्रति व्याकरणादीनामप्रवृत्तेः तथा शास्त्रीयेष्वपि। ततश्च लोकादेव शब्दार्थे तयोः सम्बन्धे च ज्ञाते अर्थबोधनाय च शब्दप्रयोगे प्राप्ते गवादय एव साधवस्तदर्थेषु प्रयोक्तव्या न गाव्यादय इति नियमार्थं शास्त्रं नियमफलन्तु धर्मः "एकः शब्दः सुप्रयुक्तः" इत्यादिश्रुतेः। नियमश्चात्र इतरनिवृत्तिफलकः पञ्चपञ्चनखभक्षणादिवत् परिसंख्यारूपः व्याकरणशास्त्रे सर्वत्रैव नियमशब्देन परिसंख्याग्रहणात् ततश्च नियमातिक्रमे परं

पुण्यविशेषो नोत्पद्यते समुत्पद्यते चार्थावबोधो नखविदलनेन तुषविमोचणवत् प्रसिद्धनियमपरत्वे तु नियमे इतरसहचारस्य पापाजनकत्वात् साधुशब्दसहकृतासाधुशब्दप्रयोगेऽपि पापानुत्पत्तिप्रसङ्गात्। श्रुतिस्तु "नापभाषितवै" इत्यादिनाऽपभ्रंशसामान्यप्रयोगं निषेधति नापभाषितव्यमिति तदर्थः। ततश्चावश्यं परिसंख्यारूप एव नियमोऽत्र ग्राह्यः। एवञ्च लोकात् सर्व्वप्रयोगाणां दुर्व्विज्ञेयतया आर्षविज्ञानं विनाऽप्रयुक्तानां दुरवधारणेन च व्याकरणाद्यारम्भः। अत एव भाष्ये सिद्धे इत्यादि वार्त्तिकव्याख्याने "महान् हि प्रयोगविषय" इति प्रतिज्ञाय "सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्य्युशाखा सहस्रवर्त्मा सामवेद एकविंशतिवह्वृचं नवधाथर्व्वणो वेदः" इत्यादिना प्रयोगविषयाणां बाहुल्यं प्रदर्श्य आर्षज्ञानमेव तत्प्रयोगज्ञाने हेतुरिति प्रतिपादितम्। ततश्च एतावन्तं प्रयोगविषयं परिच्छेत्तुमसमर्थैरस्माभिः ऋषिप्रणीतलक्षणानुसारेणानुगतानां प्रयोगोऽस्तीत्यनुमातुं शक्यते। उक्तञ्च "यथालक्षणमप्रयुक्ते निश्चिताप्रयोगे तु लक्षणं न प्रवर्त्तते इति निष्कर्ष इति"। अप्रयुक्ते प्रयुक्ततयाऽनिश्चिते इत्यर्थः निश्चिताप्रयोगे "न हि वचिरन्तिपरः प्रयुज्यत" इत्यादिनाऽप्रयोगावधारणे इत्यर्थः।

वाक्यस्फोटस्यैव बोधकत्वे स्थिते वाक्यमेव तावन्निरूप्यते। वाक्यं हि नाम कारकाद्यन्वितक्रियाप्राधान्यैकविशेष्यकबोधः

साधनपदकदम्बकम्। उक्तञ्च वाक्यपदीये।

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।

क्रियाप्रधानमेकार्थं सगुणं वाक्यमुच्यते इति।

भेदे—अखण्डस्यापि वाक्यस्य प्रकृतिप्रत्ययादिविभागोपाधिना पदानां परस्परं भेदे, समुदायात्मकवाक्याच्च भेदे, च विवक्षिते भिन्नानामेव साकाङ्क्षत्वोपपत्तेः काल्पनिकभेदवत्त्वेन साकाङ्क्षत्वादिति बोध्यम्। वास्तविकभेदस्तु नास्त्येव।

वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन

इति वाक्यपदीये अत्यन्तपदेन वास्तविकभेदराहित्यस्य प्रतिपादनात्। एवञ्चाखण्डवाक्यपक्षे पदान्तःपातिवर्णानां परस्परभिन्नत्ववत् तेभ्यः पदभेदवच्च वाक्यान्तःपातिपदानां परस्परभेदः, पदेभ्योऽपि भेदो वाक्यस्य, तेषाञ्च विशिष्टार्थद्योतनाय पदान्तःपातिवर्णानामिवानुपूर्व्वीघटकत्वेनोपयोग इति द्रष्टव्यम्। साकाङ्क्षेति निराकाङ्क्षाणां व्यवच्छेदाय, साकाङ्क्षेष्वपि पराकाङ्क्षायां न वाक्यत्वमित्यतोऽभिहितं परानाकाङ्क्षेति तेन पश्य मृगो धावतीत्यादौ मृगोधावतीतिपदयोः परस्परं साकाङ्क्षत्वेऽपि पश्यतिपदाकाङ्क्षितया न वाक्यत्वम्। अत एव च "पदानां समूहो वाक्यमर्थसमाप्तौ" इति भाष्ये इतराकाङ्क्षानिवृत्तिरूपायामर्थसमाप्तावेव वाक्यत्वमुक्तम्। "सर्व्वं हि वाक्यं क्रियया परिसमाप्यते" इति न्यायात् इतरशब्दानाकाङ्क्षायामेव च समाप्तार्थता वाक्यपदीये उक्ता। यथा।

इति कर्त्तव्यतार्थस्य सामर्थ्याद्यस्य काङ्क्षते।

अशब्दलक्षणाकाङ्क्षं समाप्तार्थं तदुच्यते इति।
वाक्यं तदेव मन्यन्ते यत् पदं चरितक्रियम्।
आख्यातशब्दे नियतं साधनं यत्र गम्यते।
तदप्येकं समाप्तार्थं वाक्यमित्युच्यते बुधैरिति च।

चरितक्रियमिति बोधितक्रियमित्यर्थस्तेन केवलनाम्नां क्रिया-बोधकपदासहचारेऽसमाप्तार्थत्वान्न वाक्यत्वम्

गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्त्तते

इति वाक्यपदीये नाम्नो गुणत्वेन साकाङ्क्षत्वाभिधानात्। पद-मिति जातावेकवचनात् पदकदम्बकमित्यर्थः तथा

बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता

इति वाक्यपदीये तिङन्तानामपि साकाङ्क्षत्वमुक्तं प्रतिपादितञ्च तत्रैव सुबन्तानामिव तिङन्तानां तिङन्तान्तरविशेषणत्वम्।

यथाऽनेकं सुबन्तं हि तिङन्तस्य विशेषणम्।
तथा तिङन्तमप्याहुस्तिङन्तस्य विशेषणमिति।

हेलाराजीये तु यथानेकमपि क्तान्तमिति प्रठितं भावप्रत्य-येन धात्वर्थक्रियाबोधनात् क्तान्ततिङन्तार्थयोरविशेषेऽपि क्तान्तार्थस्य यथा विशेषणत्वमेवमन्यतिङन्तार्थानामपीति-व्याख्यातञ्च। अत्रेदं बोध्यम्। आख्यातान्तार्थस्य तादृशार्थे-ऽन्वयो हि कर्त्तृत्वकर्मत्वान्यतरसम्बन्धेनैव न तु कारकान्तर-त्वेन, न वा प्रकारविधया कारकाणां प्रकारविधयान्वये सुब-र्थोपस्थितेर्हेतुत्वात् आख्यातान्तानां प्रत्ययान्ततया "अर्थवद-धातुरप्रत्ययः प्रातिपदिकमिति" सूत्रेण प्रातिपदिकत्वनिषेधात्

तदुत्तरं सुपोऽनुत्पत्तेः।

> क्रिया न युज्यते लिङ्गैःक्रियानाधारकारकैः।
> असत्त्वभूतता तस्या इयमेवावधार्य्यताम्।

इति वाक्यपदीये क्रियानाधारेतिविशेषणात् फलव्यापाररूपक्रियाधारकर्म्मकर्त्तृभिन्नकारकत्वायोगस्य क्रियालक्षणत्वाभिधानाच्च। अत एव मनोरमायां "नामार्थधात्वर्थयोरन्वये सुबर्थोपस्थित्यपेक्षायामपि तिङन्तार्थयोर्न तदपेक्षा ततः सुबुत्पत्त्यननुशासनात् अतस्तत्र कर्त्तृत्वकर्म्मत्वसम्बन्धेनान्वय" इत्युक्तम्। क्रियाप्रधानमिति साध्यरूपक्रियामुख्यविशेष्यकबोधजनकमित्यर्थः तेनानस्य पाक इत्यादौ सिद्धक्रियाप्राधान्यबोधके वाक्यैकदेशे नातिव्याप्तिः तस्यावश्यं भवतीत्यादिक्रियासाकाङ्क्षत्वेन तन्मुख्यविशेष्यकत्वाभावात्। उक्तञ्च वाक्यपदीये।

> क्रियानुषङ्गेण विना न पदार्थः प्रतीयते।
> सत्यो वा विपरीतो वा व्यवहारो न सम्मत इति।

अत्र च प्रमाणम् "भावप्रधानमाख्यातम् इति" निरुक्तवचनम् "भावकालकारकसंख्यास्चत्वारोऽर्था आख्यातस्य तत्र भावः प्रधान" मिति तद्भाष्यञ्च। भावो भावना धात्वर्थ इत्यर्थः भावाख्याते तु आख्यातस्यानुवाद्यार्थकत्वान्नातिप्रसङ्गः। क्रियामुख्यविशेष्यकत्वञ्च साध्यक्रियाभिन्ने विशेषणतानापन्नत्वे सति तद्विशेष्यकत्वं तेन पश्य मृगो धावतीत्यादौ धावतिपदस्य प्रश्यपदविशेषणत्वेऽपि न क्षतिः न वा "भावप्रधानमाख्यातं सत्वप्रधानानि नामानि इति" क्रियाप्राधान्यबोधकयास्कवचनविरोधः।

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता ।

हरिकारिकाव्याख्याने भूषणे भागाभ्यां तिङन्ताभ्यामित्युक्तेः पूर्व्वोक्तहर्य्युक्तेश्च तिङन्तानामपि परस्परं विशेषणभावसिद्धिः । एवञ्च पश्य मृगो धावतीत्यादौ भाष्योक्तमेकवाक्यत्वं सङ्गच्छते बोधस्तु एकमृगाभिन्नाश्रयकधावनकर्म्मकं संबोध्याभिन्नाश्रयकमभिमतं दर्शनमिति । अन्यथान्वयबोधस्य प्रथमान्तमुख्यविशेष्यकत्वे अनयोरेकवाक्यता न स्यादित्यवधेयम् । क्रिया च भावना उत्पादयितुर्व्यापाररूपा साध्यत्वेनाभिधीयमानेति बोध्यम् ।

व्यापारो भावना सैवोत्पादना सैव च क्रिया ।

इति हर्य्युक्तेः ।

यावत् सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।

आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इति ।

साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते इति च ।

वाक्यपदीयाच्च । यावदिति सर्व्वमित्यर्थः तदेव विवृणोति सिद्धमसिद्धं वेति । सिद्धं वर्त्तमानध्वंसप्रतियोगि, तद्भिन्नमसिद्धं, तच्च वर्त्तमानं भविष्यच्चेति द्विविधम् तेनापचत्पक्ष्यति पचतीत्यादौ सर्व्वत्र साध्यत्वेन असत्वरूपत्वेनाभिधीयमाना क्रियेति क्रियाशब्दस्य रूढ़िरनेन दर्शितेति भावः । यौगिकत्वमप्याह आश्रितक्रमरूपत्वादिति । आश्रितक्रमो रूपं यस्यास्तत्त्वात् पूर्व्वापरीभूतावयवकत्वादित्यर्थः तदीयावयवानामधिश्रयणाद्यधःश्रयणपर्य्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन तत्समुदायो

ऽभिधीयते यत्र च न क्रमिको व्यापारोऽस्ति तत्र रूढ़िरादरणीयेति पौर्व्वापर्य्यारोपेण वा सर्व्वत्र फलस्य स्वजनकव्यापारगतःपौर्व्वापर्य्यारोपवत् यौगिकत्वम्। अत एव फलमात्रबोधकस्यापि क्वचित् धातुत्वसिद्धिरिति फलितार्थः। इयांस्तु विशेषः पाक इत्यादौ धातुना साध्यत्वेनोपस्थाप्यायाः क्रियायाः सिद्धक्रियारूपघञर्थे विशेषणत्वं पचतीत्यादौ तु नैवमिति। अत एव

साध्यत्वेन क्रिया तत्र तिङ्पदैरभिधीयते।

इति वाक्यपदीयकारिकाव्याख्यायां भूषणसारदर्पणे तिङ्पदैरित्यतद्गुणसंविज्ञानबहुव्रीहिणा तिङन्तपदैर्धातुभिरित्यभिहितम्। तेन सर्व्वत्र धातोः साध्यरूपक्रियाबोधकत्वम्। किञ्च क्रमिकावयवानामेकदाऽसत्त्वेऽपि यत्किञ्चिदवयवसत्त्वकाले वर्त्तमानत्वव्यवहारः अवयवावयविनोरभेदारोपात् भूतभविष्यत्त्वव्यवहारस्तु सर्व्वेषामवयवानां भूतभविष्यत्त्वयोरेव, न तु यत्किञ्चित् क्रियाभूतत्वादौ। उक्तञ्च वाक्यपदीये।

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते इति।

अस्यार्थः।

क्रमिकतत्तद्व्यापारं प्रति गुणभूतैर्गौणभावेन भासमानैरवयवैरुपलक्षितः बुद्ध्या एकत्वबुद्ध्या प्रकल्पितोऽभेदो यस्मिन् तद्रूपः क्रमजन्मनां व्यापाराणां समूहः क्रियेत्यन्वयः। अत्र चलानश्वराणां व्यापाराणां मेलनासिद्ध्या बुद्ध्येत्युक्तम् तथा च बुद्धिजन्यसंस्कारद्वारा तेषां मेलनसम्भव इति भावः। अत

एव भाष्ये "क्रिया हि नामेयमत्यन्तापरिदृष्टा पूर्व्वापरीभूतावयवा न शक्यते पिण्डीभूता निदर्शयितुम्" इति व्यापारसमुदायात्मिकायाः क्रियाया दर्शनायोग्यत्वोक्त्या तदवयवानां तद्विषयत्वं व्यतिरेकमुखेन दर्शितम्। तस्याश्चाभिन्नैकबुद्धिविषयतया एकत्वव्यवहार इत्यपि बोध्यम्।

अथ वाऽनेकव्यापारव्यक्तिवृत्तिर्जातिरेव क्रियेति सिद्धान्तकल्प आदरणीयः। तस्याश्च व्यक्तिद्वारैव साध्यत्वम्, अस्ति च पचित्वादिकं जातिः पचतीत्याद्यनुगतव्यवहारात् तस्याश्चैक्यादेकत्वव्यवहार इति मन्तव्यम्। तदुक्तं वाक्यपदीये।

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम्।
असाध्यां व्यक्तिरूपेण सा साध्येत्यभिधीयते इति।

युक्तञ्चैतत् सर्व्वत्रैव लाघवाज्जातिशक्तिस्वीकारेण पच्यादिधातूनामपि तत्रैव शक्तिरुचितेति दिक्।

सा च क्रिया धातुवाच्या फलव्यापारोभयरूपा तद्विशिष्टरूपा वा "फलव्यापारयोर्धातुः" इत्यग्रिमवचनात् व्यवस्थापयिष्यते च मतभेदेन फलव्यापारयोः पृथक्शक्त्या, विशिष्टशक्त्या वा धातुवाच्यता। अत्र फलांशस्य कर्त्तुरुद्देश्यत्वेन प्राधान्याभावात् व्यापारस्यैव प्राधान्यं समुचितं, तस्य च साध्यतया कर्म्मातिरिक्तसर्व्वकारकाणां तत्रैव स्वस्वव्यापारद्वारा साधकत्वेनान्वयः। कर्म्मणस्तु फल एव क्रियाजन्यफलाश्रयतयैव तस्योद्देश्यत्वादिति विवेकः। उक्तञ्च वाक्यपदीये

प्राधान्यात्तु क्रिया पूर्व्वमर्थस्य प्रविभज्यते।

साध्यप्रयुक्तान्यङ्गानि फलं तस्याः प्रयोजकमिति।

(अर्थस्य) फलस्य तदपेक्षयेत्यर्थः (प्राधान्यात्) विशेष्यत्वात् साध्यं प्रयुक्तं यैः तानि साध्यसाधकानि(अङ्गानि)कारकाणी-त्यर्थः। अत्र फलस्य क्रियाप्रयोजकत्वाभिधानं तदुद्देशेनैव क्रियायां प्रवृत्तिरित्येवाभिसन्धाय। तथा च सर्व्वो लोकः स्वाभीष्टफलमभिप्रेप्सुस्तत्साधनाय यतते लभते च तत-स्तत्तत्फलमुपायसंसाधनेन। एवं च क्रियाफलं विक्लित्त्यादि-मभीप्सुः पाकाय यतमानो जनः पाकसंसाधनेन फलं लभते। ततश्च फलसाधनतया पाकादेरपीष्टत्वात् साध्यत्वम्।

फलविशिष्टक्रियाया धात्वर्थत्वमते तु विशिष्टत्वेनैवेष्टत्वात् विशिष्टस्यैव साध्यत्वमिति विशेषः। कारकान्वयस्त्वेतन्मते पूर्व्वोक्तदिशावसेयः एकदेशान्वयस्वीकाराच्च न कर्म्मणोऽनन्वय इति बोध्यम्।

तथा चैवं रीत्या साध्यत्वेन क्रियां जानता जनेन तस्याः प्राधान्यबुबोधयिषयैवाख्यातान्ततया धातुः प्रयुज्यते अन्यथा कृदन्ततयेति। एवञ्च भावकृदन्तस्थले धातुना साध्यरूप-क्रियावबोधनेऽपि तस्याः प्रत्ययार्थसिद्धक्रियाविशेषणत्वेन न प्राधान्यं, प्राधान्यञ्चाख्यातन्तोपस्थाप्यक्रियायाः, "भाव-प्रधानमाख्यातम्" इत्यादिनिरुक्तवचनस्य "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थप्राधान्यम्" इति न्यायस्य च परस्परं विरोधप-रिहाराय न्यायस्य आख्यातातिरिक्तविषयत्वेन व्यवस्थाप-नात्। हरिणापि धातुभावकृतोः क्रियावाचित्वाविशेषेऽपि

धातुना साध्यत्वेन, कृता तु सिद्धत्वेन क्रियाया बोधनमिति व्यवस्थापितं यथा

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः इति
आख्यातशब्दे भागाभ्यां साध्यसाधनवर्त्तिता।
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः इति च

(भागाभ्याम्) पश्य मृगोधावतीत्यादौ तिङन्ताभ्याम् (साध्यसाधनवर्त्तितेति) मृगो धावतीत्येतस्य साधनत्वम् अपरस्य साध्यत्वं, क्रियाकारकभावेन तयोरन्वयात् घञर्थक्रियायास्तु इतरक्रियायामेव साधनत्वमिति विवेकः। साध्यत्वञ्च लिङ्गसंख्यानन्वयित्वं, तद्विपरीतं सिद्धत्वं, तथा च घञाद्युपस्थाप्यक्रियायाः लिङ्गसंख्यान्वयित्वेनापरक्रियायां साधनत्वम्। युक्तञ्चैतत् यत्, घञन्तादौ द्विविधक्रियाया भानं, कारकाणां साध्यक्रिया यामेवान्वयोपगमात् कृदन्तस्थले कारकविभक्तिप्रयोगस्य विश्वजनीनतया साध्यत्वेन तदुपस्थितावेव कारकान्वयोपपत्तेः

"साध्यस्य साधनाकाङ्क्षा" इति
"नियतं साधने साध्यं क्रिया नियतसाधना" इति
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते इति

चाभियुक्तोक्तेः। अत एव "स्तोकं पाकः" इत्यादौ द्वितीयान्ततोपपद्यते साध्यक्रियाफलयोर्विशेषणे एव व्यपदेशिवद्भावपरिभाषया कर्म्मत्वेन द्वितीयाविधानात् घञाद्युपस्थाप्यक्रियाविशेषणस्य तु विशेष्यलिङ्गतया प्रथमाद्यन्तता "कृदभि-

हितो भावो द्रव्यवत् प्रकाशते" इति भाष्योक्तेः। (कृदभिहितः) कृता बोधितः (भावः) भावना धात्वर्थस्वरूपमिति यावत् द्रव्येण तुल्यं प्रकाशते द्रव्यधर्म्मान् लिङ्गसंख्याकारकत्वानि भजते इति यावत्। अत्र द्रव्यत्वं लिङ्गसंख्यान्वयित्वमेव योग्यत्वात् न तु पृथिव्याद्यात्मकत्वं ज्ञानपाकादौ तदभावात्। नापि

वस्तूपलक्षणं यत्र सर्व्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥

इति पारिभाषिकसर्व्वनामपरामर्शयोग्यत्वादिरूपं,साध्यक्रियाया अपि तथात्वेनाविशेषापत्तेः किन्तु "सत्वप्रधानानि नामानि" इति निरुक्तोक्तेरेकवाक्यतया सत्वद्रव्ययोः पर्य्यायत्वस्य बहुस्थलेषु दर्शनात् सत्वभूतत्वमेव द्रव्यत्वमिति फलितार्थः। "क्रिया न युज्यते" इत्यादिना लिङ्गाद्ययोगस्यासत्वलक्षणत्वस्याभिधानात् तद्योगस्यैव सत्वलक्षणत्वौचित्यादिति तु तत्त्वम्।

वाक्यलक्षणे (एकार्थम्) इति अविभागविवक्षायामपृथगुपस्थापकम् उक्तञ्च वाक्यपदीये वाक्यार्थस्याखण्डत्वम्

प्रतिवर्णमसंवेद्यः पदार्थप्रत्ययो यथा।
पदेष्वेवमसंवेद्यो वाक्यार्थस्तु निरूपित इति
यथैवानर्थकैर्व्वर्णैर्व्विशिष्टोऽर्थोऽभिधीयते।
पदैरनर्थकैरेवं वाक्यार्थस्य निरूपणमिति
धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते।
कृत्तद्धितानामप्यर्थः केवलानामलौकिकः।
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते इति।

न हि किञ्चित् पदं नाम रूपेण नियतं क्वचित् ।

पदानामर्थरूपञ्च वाक्यार्थादेव जायत इति च ।

(विभक्तानाम्) प्रत्ययरहितानां (केवलानाम्) प्रकृतिरहितानाम् (प्राक् विभक्तेः कृदादीनामिति शेषः (तदन्तस्य) प्रत्ययान्तधातोः विभक्त्यन्तकृदन्तादेश्चेत्यर्थः । (रूपेण) समानानुपूर्व्वीकतया (क्वचित्) अर्थे (नियतम्) तदर्थबोधनसमर्थमेव (पदं) (नहि) अस्ति, रामरामठादौ तुल्यरूपस्यापि रामभागस्य समानार्थकत्वस्याभावात् । (पदानामर्थरूपम्) अर्थात्मकत्वं वाच्यवाचकयोराध्यासिकाभेदस्य दर्शितत्वात् (वाक्यार्थात्) वाक्यार्थान्वयघटकत्वात् (जायते) प्रकाशते इत्यर्थः ।

एवञ्चाखण्डार्थकवाक्यानामानन्त्यात् वर्षशतेनापि तत्तदर्थज्ञापनस्याशक्यतया प्रकृतिप्रत्ययादिविभागकल्पनेन तत्तदर्थनिर्वचने लाघवमिति धिया लोकहितकाम्यया च महर्षिभिर्व्याकरणं प्रणीतम् । तदुक्तं वार्त्तिके

'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति

व्याकरणस्य वेदरक्षामन्त्रोहवर्णागमादिज्ञानलाघवासन्देहाः प्रयोजनमित्यर्थः । तत्र लाघवरूपं प्रयोजनं दर्शितं वेदभाष्ये सायनाचार्य्यैः । "वृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां पारायणं प्रोवाच नान्तं जगाम" इति सूक्ष्मग्राहिकतया प्रतिपदपाठापेक्षया तत्तदर्थज्ञानाय लाघवात् व्याकरणमध्येयमिति" ।

तथा केषाञ्चित् पदजातानां प्रकृतिप्रत्ययाद्यनपेक्षतया

ऽर्थबोधनाय यास्कादिभिर्निरुक्तं प्रणीतम्। निरुक्तं नाम यत्र प्रकृतिप्रत्ययादिकमनपेक्ष्यैव पदानामर्थनिर्वचनं, तदुच्यते। तत्र च काण्डत्रयम्

आद्यं नैघण्टुकं काण्डं द्वितीयं नैगमं तथा।

तृतीयं दैवतञ्चेति समाम्नायस्त्रिधा मतः॥

इति निरुक्तभाष्योक्तेः। यत्र चैकार्थवाचिनां पर्य्यायशब्दानां समुदायस्य प्रायेणोपदेशः स निघण्टुशब्दवाच्यः। तादृशा एवामरसिंहहलायुधादिप्रणीतकोषा दशविधा निघण्टवः। तत्राद्ये काण्डे त्रयोऽध्यायास्तत्र प्रथमेऽध्याये पृथिव्यादिलोक-दिक्कालादिद्रव्यविषयाणि नामानि, द्वितीये मनुष्यतदव-यवादिद्रव्यविषयाणि, तृतीये तदुभयगतह्रस्वदीर्घत्वादिधर्म्म-विषयाणीति। द्वितीये काण्डे निगमशब्दवाच्यवेदवर्त्तिनामेव शब्दानां निर्व्वचनम्। तृतीये काण्डे

वाय्वादयो भगान्ताः स्युरन्तरिक्षस्थदेवताः।

सूर्य्यादिदेवपर्य्यन्ता द्युस्थानदेवता अमी इति।

देवताविशेषनिर्वचनमिति विवेक इत्यलं प्रसङ्गागतविस्तरेण प्रकृतमनुसरामः।

श्रुतिरपि वाक्यस्याखण्डत्वं दर्शयन्ती वाक्यार्थस्याप्यखण्डत्वं प्रतिपादयति। यथा "वाग्वै पराच्यव्याकृताऽवदत्ते देवा इन्द्र-मब्रुवन्निमां नो वाचं व्याकुरु" इत्युपक्रम्य "तामिन्द्रो मध्यतो वक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते" इति व्याख्याता चैषा ऋग्वेदभाष्ये सायनाचार्य्यैः। अग्निमीळे इत्यादिवाक्

पूर्व्वस्मिन् काले(पराची)(ची)समुद्रादिध्वनिवदेकात्मिका सती (अव्याकृता) 'प्रकृतिः' 'प्रत्ययः' 'पदं' वाक्यमित्यादिविभाग-रहितासीत्(ताम्) वाचम्(मध्येऽवक्रम्य) प्रकृत्यादिरूपेण विभज्य (व्याकरोत्) इति। एवञ्चासत्यारुन्धतीदर्शनेन सत्यारुन्धती-दर्शनवत् पञ्चकोषादिव्युत्पादनन्यायेन मिथ्यावस्तुपरिहारेणा-खण्डसच्चिदानन्दप्रतिबोधनवच्चासत्यभूतप्रकृतिप्रत्ययार्थनिरूप-णेन सत्यभूताखण्डवाक्यार्थबोधनं व्याकरणादिना क्रियते इति बोध्यम्। उक्तञ्च

असत्ये वर्त्मनि स्थित्वा सत्यस्य प्रतिपादनमिति।

पञ्चकोषादिवदित्यादि

(सगुणम्)। इति कारकादीनां क्रियान्वयिनां ग्रहणाय विशेषणपर्य्यायगुणशब्दप्रयोगः। तेन तेषां क्रियाविशेषणतयैव वाक्यघटकत्वं बोध्यम् "आख्यातं सकारकविशेषणम्" इति भाष्योक्तवाक्यलक्षणे विशेषणपदस्य कारकविशेषणक्रियाविशे-षणोभयपरतया कारकविशेषणानां क्रियाविशेषणानां कारक-भिन्नसम्बोधनादीनां च वाक्यघटकत्वम्। तानि च वाक्यपदीये कतिचित् संगृह्य प्रदर्शितानि। यथा।

सम्बोधनान्तं कृत्वोऽर्थः कारकं प्रथमो वतिः।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ्।
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्।
सम्बन्धश्चाष्टकस्यास्य क्रिययैवावधार्य्यताम्।

अत्र यद्यपि सम्बोधनस्य सर्व्वत्र प्रकृतक्रियान्वयित्वं न सम्भवति

तथापि जानीहीत्यध्याहृतक्रियान्वयितया तस्याश्च प्रकृत-क्रियायामन्वयात् परम्परया भवत्येव प्रकृतक्रियान्वयित्वम्। तथा हि

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।

प्राप्ताभिमुख्यः सम्बोध्यः क्रियासु विनियुज्यते ॥

इति वाक्यपदीये क्रियासु नियोज्यस्यैव सम्बोध्यतोक्त्या विनि-योगविषयक्रियायामेव तस्य साधुत्वम्। व्रजानि देवदत्तेत्यादौ तु देवदत्तस्य गमनक्रियायां विनियोगाभावेनाप्याकाङ्क्षितत्वात् जानीहीत्यादिक्रियायामेवान्वयौचित्यात् तत्क्रियायाश्च व्रजा-नीत्यादिक्रियायां विषयत्वादिसम्बन्धेन विशेषणत्वादेकवाक्य-त्वम्। अन्यथा व्रजानि देवदत्तेत्यनयोरुभयोराकाङ्क्षाविरहेण तयोः परस्परमेकवाक्यत्वाभावेन समानवाक्याभावान्निघातानुप-पत्तेः। तथा हि "पदात्" इत्यधिकृत्य "अनुदात्तं सर्वमपादादौ" इति चोपक्रम्य (आमन्त्रितस्य च) इति सूत्रेण [illegible] पदादुत्तरवर्त्तिनोऽपादादिस्थितस्यामन्त्रितस्य [illegible] तावदुदात्तत्वं निहत्य सर्वानुदात्तत्वं विहितम्, [illegible] च "समानवाक्ये निघातयुष्मदस्मदादेशाः" [illegible]। [illegible] निघातः एकवाक्य एव व्यवस्थापितः। व्रजानि [illegible] नयोरुक्तरीत्यैकवाक्यत्व एव निघातो [illegible]। [illegible] पदीये

भाष्यकारेणापि तत्स्थले एव निघातस्वीकारादाधुनिकानां स्वरानभिज्ञानां तादृशसंबोधनस्य क्रियाविशेषणत्वानभ्युपगमोऽकिञ्चित्करः। अत एव च जानीहि देवदत्त! नो दुःखं वर्त्तते इत्यादौ क्रियापदपूर्व्वकसम्बोधनपदादुत्तरवर्त्तिनोर्युष्मदस्मदोः स्थाने वस्नसादेशः सूपपादः अन्यथा सम्बोधनपदस्य नो दुःखं वर्त्तत इत्यादिवाक्यघटकत्वानङ्गीकारे वाक्यादिस्थितयोस्तयोस्तदादेशो न स्यात् "न वाक्यादौ" इति निषेधात् इष्यते तु तदादेशः शास्त्रकारैः। एतेन प्रथमान्तमुख्यविशेष्यकान्वयबोधाभ्युपगन्तारः सुदूरपराहताः। तथात्वे व्रजानीत्यादावेकवाक्यताभङ्गप्रसङ्गात् तथा हि पश्य मृगो धावतीत्यादौ कथञ्चित् भाष्यविरोधेन विभिन्नवाक्यत्वस्वीकारेऽपि व्रजानि देवदत्त! जानीहीत्यादौ प्रयत्नसहस्रेणापि निघातव्यवस्थापनस्य जानीहि देवदत्त! नो दुःखं वर्त्तते इत्यादौ नसादेशव्यवस्थापनस्य च कर्त्तुमशक्यतया तेषु तेषु स्थानेषु न विभिन्नवाक्यता किन्त्वेकवाक्यतैवावसेया सा च क्रियामुख्यविशेष्यकान्वय एव घटते नान्यथेति दिक्।

"क्रियाभ्यावृत्तिगणने कृत्वसुच्" इत्यादिना विहितकृत्वसुजादीनामभ्यावृत्तिपदवाच्यतत्पौनःपुन्यबोधकतया तत्रैवान्वयो युक्तः। इयांस्तु विशेषः क्रियाया एव पौनःपुन्यसम्भवेनाभ्यावृत्तिपदेनैव क्रियाप्राप्तौ पुनः क्रियाग्रहणेन इतरांशे विशेषणतानापन्नसाध्यक्रियाया एवाभ्यावृत्तौ तेषां साधुत्वज्ञापनात् पञ्चकृत्वःपचतीत्येव प्रयोगः न तु पञ्चकृत्वःपाक इत्यपि।

केचित् तु "द्विर्वचनेऽचीति" निर्देशात् साध्यरूपक्रियान्वये एव तेषां साधुत्वं तेन भावघञन्तादावपि धात्वंशेन साध्यरूपक्रियाया अभिधानात् पञ्चकृत्वः पाक इत्यपि भवत्येव। सिद्धरूपक्रियायां तदन्वयविवक्षायां तु नैवं, तेन पञ्च पाका इत्येव स्यादिति प्राहुः।

(कारकम्) वक्ष्यमाणलक्षणमपि क्रियान्वयि "कारकेइत्यधिकृत्य तेषां विधानात् कारकइत्यस्य कर्त्तृत्वादिव्यपदेशकारित्वेन क्रियायामित्यर्थः। "नियतं साधने साध्यम्" इत्यादि प्रागुक्तवचनजातानि चात्र तत्साधकान्यनुसन्धेयानि

(प्रथमो वतिः) "तेन तुल्यं क्रिया चेद्वतिः" इति विहितवतेरपि क्रियायामन्वयः। तेन तुल्यमित्यर्थे वतिः स्यात् तत्तुल्यं यत् सा यदि क्रिया स्यादिति सूत्रार्थः (तुल्यम्) इति सामान्येन नपुंसकम्। तथा च देवदत्तवत् पचतीत्यादौ देवदत्ततुल्या एकाभिन्नाश्रयिका विक्लित्त्यनुकूला भावनेति बोधः। विग्रहस्तु सर्व्वत्र तेन तुल्यमित्येवंरूपः।

"धातुसम्बन्धे प्रत्ययाः" इत्यारभ्य विहितप्रत्ययानां स्वप्रकृतिभिन्नधात्वर्थरूपक्रियासम्बन्धे एव विधानात् क्रियायामेवान्वयः। यथा पितृव्यघाती पुत्रो जनितेत्यादौ णिन्यादेः पुत्रजनने अन्वयः। प्रसज्यप्रतिषेधवाची (असमस्तनञ्) क्रियान्वयी।

"प्रसज्यप्रतिषेधस्तु क्रियया सह यत्र नञ्"

इत्यनेन प्रसज्यप्रतिषेधरूपात्यन्ताभाववाचिनः क्रियान्वयित्वोक्तेः

घटः पटो नेत्यादिभेदवाचकनञः क्रियान्वयित्वाभावेऽपि न क्षतिः । अत्र च तादृशस्यासमस्तनञः क्रियान्वयित्वमेवोच्यते न तु तद्भिन्नस्य क्रियान्वयित्वं व्यवच्छिद्यते, असूर्य्यंपश्येत्यादौ असमर्थसमासे समस्तस्यापि प्रतिषेधवाचिनः क्रियान्वयित्व-स्वीकारात् समर्थसमासे च अनुपलम्भइत्यादौ क्रियान्वयित्वा-भ्युपगमाच्च ।

"यस्य च भावेन भावलक्षणम्" इतिविहितसप्तम्याः क्रियाया-मेवान्वयः । स्वप्रकृत्यर्थसम्बन्धिभावद्वारेणैव इतरभावे विशेषण-तया तत्रैव साधुत्वात् । तथा च गोषु दुह्यमानास्वागत इत्यादौ गोकर्म्मकदोहनसमानकालिकागमनकर्त्तेत्येवं बोधः । "षष्ठी चानादरे" इति विहितषष्ठ्यादेरपि क्रियायामन्वयः । अना-दर इत्यस्य अनादरपूर्व्वकार्थकत्वात् कारके इत्यधिकाराच्च अनादरपूर्व्वकक्रियायामिति सूत्रार्थः । उपलक्षणञ्चैतत् क्त्वातुमुन्नादयोऽपि क्रियान्वयिनो बोध्याः । "तुमुण्ण्वुलौ क्रिया-यां क्रियार्थायाम् इति" "समानकर्त्तृकयोः पूर्व्वकाले" इत्या-दिना तेषामपि क्रियायामेव साधुत्वोक्तेः । व्यक्तीभविष्यति चैतत् तत्तन्निरूपणावसरे । अत्र च सर्व्वत्र तत्तच्छब्दानां क्रियान्व-योक्तिस्तु तत्तदर्थद्वारेणैव, तेन शब्दानां तदन्वयित्वाभावेऽपि न क्षतिः । तथा असमस्तनञः क्रियान्वयोक्तिरपि विशेष्यतया तदन्वयाभिप्रायेण क्रियाप्रधानमित्यत्रापि क्रियापदस्य तदभाव-स्याप्युपलक्षणत्वमेतत्कारिकायामष्टानां मध्ये सप्तानां क्रिया-विशेषणत्वमेकस्य विशेष्यत्वमिति च विवेकः । अत एव देव-

...ो न पचतीत्यादौ देवदत्ताभिन्नैकाश्रयकविक्लित्त्यनुकूल-
वनाऽभाव इति बोधः घटो नास्तीत्यादौ च घटाभिन्नैका-
श्रयकास्तित्वाभावः न तु घटाभावमात्रं तथा सति नाहमस्मि
न त्वमसीत्यादिपुरुषवचनविशेषप्रयोगाद्यनुपपत्तेः। "युष्मदि
मध्यमोऽस्मद्युत्तम" इत्यादिसूत्रे युष्मदादिसामानाधि-
करणे तिङर्थस्य, मध्यमादिवचनप्रयोगविधानात् अभावस्य
तथात्वाभावात्। अतः शास्त्रकाराणां तादृशप्रयोगान्यथानुप-
पत्त्या सदाद्याश्रयकधात्वर्थाभाव एव नञ्समभिव्याहारे वाक्यार्थं
इत्यवसीयते। अथवाऽभावस्य विशेषणतया क्रियायामन्वयाङ्गी-
कारेऽपि न क्षतिः। तथा च सदाद्यभिन्नैकाश्रयकाभावप्रति-
योगिनी सत्तादिक्रियेति बोधः तिङर्थाश्रयस्य युष्मदादिसामा-
नाधिकरण्यान्न पुरुषव्यवस्थानुपपत्तिः। आख्यातार्थस्याश्रयस्या-
भावे विशेषणत्वेऽपि अभावस्य प्रतियोगितया धात्वर्थेऽन्वयात्
परम्परया धात्वर्थे विशेषणत्वमव्याहतमेव। एतत् सर्व्वं मनसि
निधायाभिहितमभियुक्तैः।

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्य्यतामिति।

(तदर्थः) नञर्थः (न्यायतः) युक्तितः(विशेषणम्)स्वप्रतियोगिनि
("विशेष्यः) तदपेक्षया इति तदर्थः। अत्र च विशेषं नञर्थ-
निर्णये वक्ष्यते।

एवं वाक्यलक्षणे आख्यातान्तप्रधानमित्यनुक्त्वा क्रिया-
प्रधानमित्युक्तिस्तु आख्यातान्तभिन्नानामपि भावतव्यादि-

प्रत्ययान्तानां क्रियाप्राधान्यबोधकतया क्रियान्तरानाकाङ्क्षि-तया च समाप्तार्थत्वात् वाक्यत्वमस्तीति द्योतनायैव । अत एव एतद्वाक्यलक्षणमूलीभूतस्य ।

आख्यातं सविशेषणकारकम् इति" भाष्यव्याख्यायां कैयटे नोक्तम् आख्यातेन च क्रियाप्रधानं लक्ष्यतेऽतोऽतिङन्तेष्वपि देवदत्तेन शयितव्यमित्यादिषु वाक्यत्वमिति । एवञ्च निरुक्त-वचनेऽपि आख्यातपदस्य भावतव्यादीनामुपलक्षणपरत्वं बोध्यम् । तथा पचतिकल्पमित्यादीनामपि क्रियाप्राधान्य-बोधकतया वाक्यत्वं तत्र, हि ईषदसमाप्तरूपस्य कल्पवाच्यार्थस्य योग्यतया स्वप्रकृतितिङन्तबोध्ये तिङर्थान्वितधात्वर्थे एवान्वय-स्वीकारात् क्रियाप्राधान्यबोधकत्वमव्याहतमेव अत एव तत्र प्रातिपदिकार्थे प्रथमैकवचनं नपुंसकलिङ्गता च । तिङर्थाश्रय-विशेषणत्वे, आश्रयस्य देवदत्तादिभिः सामानाधिकरण्यात् तद-भिन्नलिङ्गवचनताद्यापत्तिः । नचेष्यते तथा देवदत्ताः पचन्ति-कल्पमित्येकवचनान्ततयैव सर्व्वत्र प्रयोगात् नापि क्रियाविशे-षणत्वेन तत्र द्वितीयाद्यापत्तिरेकपदोपात्तत्वेन तदप्रसक्तेः विभिन्नपदोपात्तविशेषणएव तत्साधुत्वोक्तेरित्यन्यत्र विस्तरः ।

एवञ्च काश्यां हस्ताभ्यां पात्रात् विप्राय यज्ञदत्तो धनं साधु ददातीत्यादौ यज्ञदत्ताभिन्नैकाश्रयिका काश्यधिकरणिका हस्तकरणिका पात्रापादानिका विप्रोद्देश्यिका धनाश्रयकस्वत्व त्यागानुकूला साध्वभिन्ना वर्त्तमाना भावनेति बोधः । सम्बोधनान्तपदसमभिव्याहारे च सम्बोध्यपुरुषाश्रयकं प्रव-

र्त्तनाविषयं तादृशभावनाकर्म्मकं ज्ञानमिति बोधः सम्बोधन-पदेनैव नियोज्यायाः जानीहीत्यादिकक्रियाया आक्षेपात् तस्याञ्च कर्म्मत्वसम्बन्धेन स्वकारकाद्यन्वितप्रकृतक्रियाया अन्वयादेकवाक्यत्वम्। तथा च सति तात्पर्य्ये योग्यतादिसमवधाने च कारकविशेषणाद्यन्विताया एकस्याः क्रियायाः कर्त्तृकर्म्म-त्वान्यतरसम्बन्धेनापरस्यां क्रियायामन्वयो भवत्येव बाधका-भावात् पूर्व्वोक्तवचनयुक्तिप्रामाण्याच्च स्वीकृतञ्च भाष्यकृता पचति भवति, पश्य मृगो धावतीत्यादौ क्रिययोरप्यन्वयादेक-वाक्यत्वम्। बोधस्तु विक्लित्त्यनुकूलभावनाश्रयिका उत्पत्त्यनु-कूला भावनेति मृगाभिन्नैकाश्रयकधावनकर्म्मकं त्वदभिन्नैका-श्रयकं प्रवर्त्तनाविषयो दर्शनमित्यादिरूपः। तथा च भाव-नाप्रकारकान्वयबोधे भावतव्याद्यन्यतमजन्योपस्थितेर्हेतुत्ववत् धात्वन्तरार्थभावनोपस्थितेर्हेतुत्वं कल्प्यते।

अत्र च सर्व्वेषां कारकाणां स्वस्वविशेषणाद्यन्वितानां क्रियायां धर्म्मिणि एकत्र द्वयमिति रीत्या बोधः न तु तेषां परस्पर विशिष्टवैशिष्ट्यमर्य्यादया, सर्व्वेषामेव क्रियाकाङ्क्षितया परस्परान्वयायोग्यत्वात्

गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति

न्यायाच्च। (गुणानाम्) (विशेषणानाम्) परार्थत्वात् विशेष्य-मात्राकाङ्क्षित्वात् (असम्बन्धः) परस्परमनन्वयः (समत्वात्) सर्व्वेषामेव विशेष्याकाङ्क्षित्वेन तुल्यत्वादिति तदर्थः। एवञ्च गेहे स्थाल्यामोदनं पचतीत्यादौ गेहस्थाल्योः क्रियान्वयेऽपि

चैत्रौदनापेक्षयाऽधिकरणत्वप्रतीतिः मानसी न तु शाब्दीत्येवमन्यत्रापि ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य-विरचिते शब्दार्थरत्ने वाक्यकाण्डं समाप्तम् ।

---

## अथ पदकाण्डम् ।

पदकदम्बकं वाक्यमित्युक्तं तत्र किंस्वरूपाणि ? पदानि कतिविधानि ? वा तानीत्येतावदभिधीयते। सुप्तिङन्तं पदमिति पारिभाषिकपदलक्षणम् उपसर्गनिपातयोरपि सुबन्तत्वस्वीकारात् पदत्वं, तदस्वीकारपक्षे तु अर्थबोधकः प्रयोगार्हवर्णसमुदायः पदम्, उपसर्गनिपातयोरपि द्योत्यार्थबोधकतया पदत्वं, प्रकृत्यादीनां केवलानामर्थबोधकानामपि न तादृक्पदत्वं प्रयोगार्हत्वाभावात्। प्रयोगार्हत्वञ्च पाणिन्याद्यनुशासनवत्त्वम् अनुशासनञ्चास्मिन्नर्थे अमुं शब्दं प्रयुञ्जीतेत्येवं रूपं, सूत्राचरणे तादृशानुशासनालाभेऽपि मुनीनां तत्रैव तात्पर्य्यावधारणात् शब्दानुशासनस्यैव व्याकरणरूपत्वव्यवस्थापनाच्च। एवञ्च यादृशवर्णसमुदायो यदर्थबोधनायानुशिष्टः तादृश एव तस्मिन्नर्थे प्रयोक्तव्य इति प्रयोगार्हत्वेनैवार्थबोधकत्व-

ग्राप्तौ पुनस्तद्ग्रहणं भू सत्तायामित्यादौ भूभागस्य पदत्व-वारणाय। उक्तञ्च

अत एव गवित्याह भू सत्तायामितीदृशम्।

न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतमिति।

अत्र भूभागस्य साधुत्वेन प्रयोगार्हत्वेऽपि अर्थावबोधकत्वाभावा-देव पदत्वनिषेधः। पद्यते ज्ञायतेऽनेनेति व्युत्पत्त्या पदशब्दो-ऽर्थावबोधकशब्दमात्रपरोऽपि द्रष्टव्यः। तेन प्रकृत्यादीनां पदत्वसिद्धिः। कथमन्यथा "समर्थः पदविधिः" इति सूत्रे धातुनाममात्रेण समासे पदविधित्वसिद्धिर्दृश्यते च धातुना नाम्ना च सुबन्तानां समासः अतः पदशब्दस्य त्रिधैव प्रवृत्तिः योग्यतादिवशात् प्रयोगानुसारेण तत्तदर्थग्रहणमिति बोध्यम्।

तानि च पदानि चतुर्व्विधानि सुबन्ताख्यातान्तनिपातोप-सर्गभेदात्

चत्वारि पदजातानि नामाख्यातनिपातोपसर्गाख्यानीति यास्कोक्तेः अत्र नामपदेन नाममात्रप्रकृतिकाः सुप एव गृह्यन्ते न क्यजादयस्तेषां सुबन्तप्रकृतिकत्वात् ततश्च "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमिति" परिभाषया सुबन्तग्रहणम् एवमाख्यातपदेऽपि एवञ्च सुबन्तमाख्यातान्त-ञ्चेत्यर्थः निपातोपसर्गयोः सुबन्तत्वास्वीकारेणाप्राप्ते पृथग्ग्रह-णम्। अत्र च पदजातानीति पदशब्दः अर्थावबोधकप्रयो-गार्हरूपपदविषयः सुबन्ताख्यातान्तयोरपि समुदायस्य वाच-कत्वपक्षे अर्थबोधकत्वसत्त्वात्। उक्तञ्च वाक्यपदीय

द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः।
स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायक इति॥

(समुदायः) प्रकृतिप्रत्ययसमुदाय इत्यर्थः। तदस्वीकारपक्षे तु एकशेषेण पारिभाषिकप्रयोगार्होभयविधे पदे एव पदशब्दोऽभिधत्ते तेनाद्ययोः पारिभाषिकपदत्वमन्त्ययोस्तु प्रयोगार्हपदत्वमिति विवेकः।

श्रुतिरप्येतद्विभागं रूपकविधया दर्शयति।

चत्वारि शृङ्गास्त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीतीति।

(अस्य) व्याकरणरूपवृषभस्य (चत्वारि) नामादीनि निरुक्तोक्तानि (शृङ्गाः) शृङ्गाणि तद्ग्रहणेनैव सर्व्वप्रत्ययादिकरणात् शृङ्गत्वमेषाम्। (त्रयः) कालाः (पादाः) गतिहेतुत्वात्

न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासते

इत्युक्तेः। (द्वे शीर्षे) फलं व्यापारश्च तत्रैव सर्व्वेषां कारकाणां विशेषणत्वेन तयोः प्राधान्यात् शीर्षता। (सप्त) प्रथमाद्या विभक्तयः (हस्तासः हस्ताः) सर्व्वक्रियासाधककारकाद्यर्थत्वात् हस्तत्वमासाम्। (रोरवीति) साधुत्वेन ज्ञापयतीत्यर्थः। अत्र कालफलव्यापाराणां शब्दार्थत्वेऽपि शब्दार्थयोरभेदेनार्थरूपत्वात् शब्दत्वेन रूपणमिति बोध्यम्।

तेषाञ्च बोधकताऽन्वयव्यतिरेकाभ्यामवसीयते। तथा हि व्यवहारकाले यत्पदश्रवणे नियतं यदर्थोपलब्धिस्तत्पदमवश्यम् आध्यासिकाभेदेन स्वसम्बन्धिनमर्थमुपस्थापयति तदुपस्थितौ

च वाक्यार्थमर्य्यादया विशिष्टार्थबोधः। उक्तञ्च वाक्यपदीये

ये शब्दा नित्यसम्बन्धा विवेके ज्ञातशक्तयः।

अन्वयव्यतिरेकाभ्यां तेषामर्थो विभज्यते इति॥

(विवेके) वाक्याद्भिन्नत्वेन कल्पनायामेव पदानामर्थविभागो नान्यथेति।

तेषु चतुर्व्विधेषु पदेषु मध्ये नामाख्यातयोरेव वाचकता द्योकता पुनरुपसर्गाणां केषाञ्चिन्निपातानाञ्च, केषाञ्चिच्च निपातानां वाचकता, केषाञ्चिन्निरर्थकता च। उक्तञ्च

चतुर्व्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।

क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोरिति॥

चतुर्व्विधानां पदानां मध्ये सुबन्ताख्यातान्तयोरेव "प्रत्ययो वाचकः प्रकृतिर्व्वाचिका समुदायो वा वाचक इति" (संशयोत्पत्तेः) तन्निर्णयाय प्रकृत्यादेरर्थविभागः। तत्प्रदर्शनञ्च यथा तत्रैव।

द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः।

स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायक इति।

एतत् पचत्रयमध्याकरे सिद्धान्तितम्। तथा

प्रादयो द्योतका एव वाचका न तु ते स्मृताः।

उपास्येते हरिहरौ लकारो जायते यथेति।

अत्र "लः कर्म्मणि भावे चाकर्म्मकेभ्यः" इति सूत्रेणाकर्म्मकेभ्यो विहितभावलकारापत्तिरासधातोरकर्म्मकत्वादत उपसर्गस्य द्योतकता तादृशधातोरेवाराधनार्थत्वेन सकर्म्मकत्वात् कर्म्मणि

लकारोपपत्तिः। तथा

निपाता द्योतकाः केचित् पृथगर्थाभिधायकाः।

आगमा इव केऽपि स्युर्निरर्थाः समुदीरिता इति च

वाक्यपदीये उक्तम्। (केचिन्निपाताः) द्योतकाः। यथा गुरुं नमस्करोतीत्यादौ कृधातोरेव नमनानुकूलक्रियाबोधनात् तदर्थबोधने तात्पर्य्यग्राहकमेव नमःपदं तेन न चतुर्थी। वाचकास्तु ब्राह्मणाय नमस्कुर्वित्यादौ अत्र पृथगर्थाभिधायित्वेन तद्योगे चतुर्थी। एवं नञादयोऽपि वाचका एव, (केऽपि तु) आगमा इव। (निरर्थकाः) एव यथा श्लोके पादपूरणमात्रार्थकाः। एवञ्च "अर्थवदिति" सूत्रेणैव सर्व्वेषां द्योतकवाचकानां प्रातिपदिकत्वसिद्धावपि "अनर्थकस्य चाव्ययस्य प्रातिपदिकसंज्ञा वक्तव्येति" वार्त्तिककारेण यदनर्थकनिपातानां प्रातिपदिकत्वं विहितं तत् सर्व्वेषामेव विभक्तिमत्त्वं द्योतयतीति बोध्यं तेषां विभक्तिमत्त्वेऽपि न केवलप्रयोगः उक्तञ्च वाक्यपदीये।

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः।

प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते इति।

(केवलाः) नामधात्वादिभिरसहिता इत्यर्थः। अधिकमग्रे निरूपयिष्यामः।

एवं प्रकृतिप्रत्ययादिसमुदायरूपपदस्वरूपे तद्विभागे च दर्शिते इदानीं तदवयवरूपप्रकृतिप्रत्ययस्वरूपविभागौ प्रदर्श्यते। तत्र प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययविधानावधि-

भूतः शब्दविशेषः सर्व्वेषामेव प्रत्ययानां प्रकृतिं निमित्तीकृत्यै-वोत्पत्तिविधानात् प्रत्ययानाञ्च तत्र प्रत्यायकत्वरूपेणैव निवेशः न तु वक्ष्यमाणप्रत्ययत्वेन तेन नान्योन्याश्रयः। अवधित्वञ्च पूर्व्वापरत्वरूपं ग्राह्यं तेन वहुचः निमित्तप्रकृतौ नाप्रसङ्गः। वस्तुतस्तु सिद्धान्ते वृत्तिशब्दानां समुदायशक्तिस्वीकारात् तद्धि-तादीनां निरर्थकत्वान्न तत्र प्रकृतिप्रत्ययादिविभागः। अत एव भाष्ये "तावेव सुप्तिङौ यौ ततः परौ सैव प्रकृतिराद्येति" सुप्तिङ्मात्रयोरेव प्रत्ययत्वमित्युक्तम्। (ततः) विधानावधेः (यौ परौ तावेव सुप्तिङौ) या च तयोः (आद्या) विधानावधि-भूता (सैव प्रकृतिः) इति तदर्थः। एतदभिप्रायेणैव हरिणा।

यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने।

यदपेक्षस्तयोः पूर्व्वा प्रकृतिः प्रत्ययः पर इति।

प्रकृत्यादिलक्षणमुक्तम्। अत्र च पूर्व्वत्वं बोधकशब्दविधाना-वधित्वमेव बोध्यं भाष्यैकवाक्यत्वात् न त्वेतत्कारिकोपात्तपूर्व्वा-परत्वं तथा सति पचतीत्यादौ तिङादेरेव धात्वर्थे स्वार्थप्रकार-कान्वयबोधजनकत्वस्वीकारात् तत्रातिव्याप्तिः। एवञ्च निरुक्त-पूर्व्वत्वरूपलक्षणेनैवाप्रसङ्गातिप्रसङ्गादिवारणसम्भवे प्रकृतिप्रत्य-ययोरर्थबोधकत्वसाकाङ्क्षत्वद्योतनायैव यः शब्द इत्यादिकथनं बोध्यमेवञ्च यस्यार्थे इत्यत्र विशेष्यतया विशेषणतया वान्वयबोधने इत्यर्थः तेन सिद्धान्ते तिङर्थप्रकारकान्वयबोधेऽपि न क्षतिः। तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधि-भूतत्वं तत्प्रकृतित्वमिति फलितम् एवञ्चावयवशक्तिस्वीकारे-

ऽपि वहुचि अतिप्रसङ्गादिशङ्कापि नोदेति वह्वचः प्रकृति-विधानावधित्वाभावात् अवधित्वस्य पूर्व्वापरत्वरूपस्य निवेशाच्च अत एतत्पक्षे भाष्ये सुप्तिङ्शब्दो प्रत्ययान्तरस्याप्युलक्षकाविति द्रष्टव्यम्। तथा शेखरकारेणापि प्रत्ययविधावुद्देश्य-तावच्छेदकाक्रान्तत्वमेव प्रकृतित्वमित्यभिदधे पूर्व्वसिद्धवस्तुन एव उद्देश्यत्वसम्भवात् पूर्व्वत्वमर्थायातं वह्वचोऽपि सुप उद्देश्यत्वान्न किञ्चिद्दूषणमावहतीति एवञ्च प्रकरोति प्रत्ययं बोधञ्चेति व्युत्पत्तिमत्त्वात् प्रकृतिशब्दो योगरूढ़ इति बोध्यम्।

प्रत्ययस्तु प्रकृतिमवधीकृत्य विधीयमानः स्वार्थबोधकः शब्द-विशेषः प्रागुक्तभाष्योक्तेः स्वीयमर्थं प्रत्याययतीति प्रत्ययलक्षणे भाष्योक्तेश्च तथैवावगम्यते। अवधिश्च पूर्व्वापररूपो ग्राह्यः तेन वहुचि नाप्रसङ्गः तस्यापि पकृत्यवधिकत्वेन विधीयमानत्वात् सिद्धान्ते तु वृत्तिशब्दानां समुदायशक्तिस्वीकारेण वहुचो निरर्थक-तया मुख्यप्रत्ययत्वाभावादेव पूर्व्वत्वरूपावधिप्रवेशेऽपि न क्षतिः। अत एव पूर्व्वोक्तहरिकारिकायां प्रत्ययः पर इत्यनेन परत्वेन विधीयमानत्वं प्रत्ययत्वमुक्तं तस्य च मुख्यत्वद्योतनार्थं स्वार्थ-कत्वसाकाङ्क्षत्वकथनाय च इतरद्विशेषणम्। तथा च तदर्था-न्वितस्वार्थबोधने तदपेक्षत्वे सति तदवधिकत्वेन विधीयमानत्वं तत्प्रत्ययत्वमिति फलितोऽर्थः। अन्वितत्वञ्च विशेष्यतया विशेषण-तया वा ग्राह्यं तेन तिङादेर्धात्वर्थविशेष्यकान्वयबोधकत्वेऽपि न क्षतिः। यदि सावयवशक्तिस्वीकारस्तदा परपदेनावधिमात्रं लक्षणीयम् अवधिश्च पूर्व्वापरान्यतर एव निवेशनीयः। एवञ्च

प्रत्ययनिमित्तकप्रकृत्यङ्गकार्य्यविशेषे विकरणागमादीनां प्रत्यय-त्वस्वीकारे परत्वमात्रं प्रत्ययत्वमिति बोध्यम् अथवा "प्रत्ययः" इत्यधिकृत्यापञ्चमाध्यायसमाप्तेर्व्विधीयमानत्वं पारिभाषिक-प्रत्ययत्वं तत्रैव अर्थबोधकत्वे सतीति विशेषणे मुख्यप्रत्ययत्व-समान्यलक्षणं पर्य्यवस्यति तत्तत्प्रत्ययत्वन्तूक्तमेव। स्वार्थिक-प्रत्ययानामपि प्रकृत्यर्थानुवादितया स्वार्थबोधकत्वमत एवाभि-हितं वाक्यपदीये।

स्वार्थिकाः प्रत्ययाः केचित् प्रकृत्यर्थानुवादिन इति।

एतदनुरोधेनैव शेखरादौ स्वस्वप्रकृत्यर्थान्यतरप्रत्यायकत्वं प्रत्ययानामुक्तम्। विकरणादयः पुनः सर्व्वथा निरर्थकाः तेषां द्योतकत्वाद्यनङ्गीकारात् तद्व्यतिरेकेणापि कृदादौ धातु-मात्रादेवार्थप्रतीतेर्दर्शनात्। उक्तञ्च वाक्यपदीये।

यत्र वाऽव्यभिचारेण तयोः शक्तिप्रकल्पनम्।

नियमस्तत्र नियमो नत्वेवं शपृश्नमादिष्विति।

(यत्र) ययोः अव्यभिचारेण अन्वयव्यतिरेकाभ्याम् (नियमः) अर्थप्रतीतिनियमः (तयोः) प्रकृतिप्रत्यययोः (शक्तिप्रकल्पनम्)। यत्र चैवं(न नियमस्तत्र) शबादिषु नेत्यस्याद्वृत्त्या शक्तिप्रकल्पनं नेत्यर्थः।

एवञ्च प्रकृतिप्रत्ययसामान्यलक्षणे स्थितेऽधुना तद्विभागो-ऽभिधीयते। सिद्धान्तेऽवयवशक्त्यस्वीकारेण कृत्तद्धितादौ समु-दायशक्तिस्वीकारात् निपातादीनां निर्व्विभक्तिकत्वपक्षे द्विवि-धैव प्रकृतिः नामधातुभेदात् अवयवशक्तिस्वीकारे तु तद्धितेषु

मासादीनामिव निपातानामपि प्रकृतित्वमपि द्रष्टव्यम् धातू-नामवान्तरविभागस्तु तत्तदवसरे दर्शयिष्यते। एवं प्रत्ययो-ऽपि सिद्धान्ते द्विविध एव सुप्तिङ्भेदात् अवयवशक्तिस्वीकारे तु कृत्तद्धितसनादिभेदेन नानाविध इत्यवधेयं तद्विशेषस्तावसरे दर्शयिष्यते।

एवं प्रकृतिप्रत्ययसामान्यविभागे स्थिते पूर्व्वस्थितत्वेन प्रत्ययनिमित्तत्वेन चाभ्यर्हितत्वात् प्रथमं प्रकृतिविशेषे निरूप-णीये सर्व्वेषां नाम्नां मूलीभूता धातुरूपप्रकृतिरेव प्रथमं निरू-प्यते। धातुर्नाम क्रियावाचको गणादिपठितः शब्दविशेषः क्रिया च पूर्व्वोक्तफलानुकूलो व्यापार एव सर्व्वेषाञ्च कार-काणामन्वयोपपत्तये कालान्वयोपपत्तये च धातूनां क्रियावाचक-त्वाङ्गीकारः। तथा हि

क्रियाभेदाय कालस्तु संख्या सर्व्वस्य भेदिकेति।

वाक्यपदीये कालानां क्रियाभेदकत्वमुक्तमुक्तञ्च तत्रैव "क्रिया नियतसाधना" इत्यादिना साधनानां क्रियाकाङ्क्षित्वं, तत्र यदि धातुभिः क्रिया न बोध्येत क्व तदा तेषामन्वयो विशेषणत्वं वा भवेत्? अतोऽवश्यं सर्व्वेषां क्रियावाचकत्वं स्वीकार्य्यं, धातूनां फलमात्रवाचकत्वे आख्यातानां व्यापा-रार्थकत्वे कृदादिस्थले आख्याताभावेन कारकाद्यन्वयानु-पपत्तिः न च धातूनां क्रियामात्रवाचकत्वं त्यजिगम्योः पर्य्यायतापत्तेः तथा च फलवाचकत्वस्य तेषां प्रायशो गणपाठे एव उक्तत्वात् न तदंशे विवादः। किञ्च फलावाच्छिन्न-

क्रियायाः पृथक्शक्त्या विशिष्टशक्त्या वा धात्वर्थत्वाभावे सकर्म्म-
ाकर्म्मकविभागोच्छेदः स्यात्, स्याच्च फलमात्रस्य धात्वर्थत्वे
र्व्वेषां कारकाणां तत्रानन्वयः तत्रैव कालान्वयोपगमे च
यापारविगमकालेऽपि फलसत्त्वे वर्त्तमानत्वादिप्रयोगापत्तिः।
ग्रतोऽवश्यं क्रियावाचकत्वं स्वीकार्य्यमत एव "धातोरर्थः क्रियो-
च्यते" इत्यनेन धात्वर्थत्वेनैव क्रियात्वस्वीकारः। अत एव च
"भूवादयो धातवः" इति पाणिनीयसूत्रमपि क्रियावाचकत्वं
धातुमात्राणां प्रतिपादयति। तथा हि भूश्च वाश्च भूवौ
आदिश्चादिश्चादी भूवौ आदी येषां ते धातव इति तथा चात्र
प्रथम आदिशब्दो व्यवस्थावाची भुवा सह तदन्वयात् भूप्रभृतय
इत्यर्थलाभः द्वितीय आदिशब्दः सादृश्यवाची वाधातुना तद-
न्वयस्तेन वासदृशा इत्यर्थलाभः तत्सादृश्यञ्च क्रियावाचित्वेन
वाधातोर्गत्यर्थतया क्रियावाचित्वप्रसिद्धेस्तथा च भूप्रभृतयः
क्रियावाचित्वेन वासदृशा धातव इति फलितम्। भूवस्यादित्वं
गणपाठापेक्षया तस्य च क्रियावाचकत्वं पूर्व्वोक्तयुक्तेरिति
संक्षेपः। अत्र क्रियावाचित्वानुक्तौ गणपठितानां सर्व्वनामा-
व्ययादीनामपि धातुत्वापत्तिः तन्मात्रोक्तौ च हिरुगाद्यव्ययानां
क्रियावाचित्वेन धातुत्वापत्तिः अत उभयमुक्तम्। उक्तञ्च

किञ्च क्रियावाचकतां विना धातुत्वमेव नो।

सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः।

न हि तत् पाठमात्रेण युक्तमित्याकरे स्फुटमिति

(पाठः) गणे पाठः। विदि अवयवे गडि वदनैकदेशे इत्यादि-

द्रव्यवाचिनामपि तत्साधकक्रियावाचित्वमस्त्येव कालकारका-द्यन्वयानुरोधात्। तत्फलस्य द्रव्यरूपत्वेऽपि न क्षतिः। गणा-दीत्यादिपदेन सूत्रसंज्ञासूत्रग्रहणं तेन सौत्राणां स्कन्भुप्रभृ-तीनां "सनादयो धातवः" इत्यादीनाञ्च प्रत्ययान्तानां धातु-त्वमव्याहतमेव दर्शितयुक्तेः तत्रापि क्रियावाचित्वादेरवश्यं स्वीका-राच्च नाप्रसङ्ग इति दिक्।

ते च सर्व्वेऽपि धातवः सकर्म्मकाकर्म्मभेदेन द्विविधाः। तत्र व्यापाराधिकरणमात्रावृत्तिफलवाचकः सकर्म्मकः पचादेः व्यापाराधिकरणावृत्तिविक्लित्तिरूपफलस्य बोधकतया सकर्म्म-कत्वं, कर्त्तृकर्म्मोभयनिष्ठफलबोधकस्यापि गम्यादेः व्यापा-राधिकरणमात्रावृत्तिफलबोधकतया सकर्म्मकत्वम्। भूप्रभृ-तीनां तु व्यापाराधिकरणमात्रवृत्तिफलबोधकतया न सकर्म्म-कत्वं, फलस्य सत्तायास्तत्सम्बन्धरूपव्यापारस्यैकस्मिन्नेव धर्म्मिणि घटादौ सत्त्वात्। उक्तञ्च वाक्यपदीये

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते।

अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मक इति।

अस्यायमर्थः (आत्मानम्) स्वरूपम् (बिभ्रत्) आत्मधारणानु-कूलव्यापाराश्रयः (अस्तीति) पदेन समानाधिकरणतया (व्यप-दिश्यते) तदभेदबोधनाय तिङादिकं प्रयुज्यते इति यावत् (तेन) आत्मनात्मरूपेण (कर्म्मणा) धारणकर्म्मणा (धातुः न सकर्म्मकः) अत्र हेतुः (अन्तर्भावात्) धात्वर्थ एव तस्य कर्म्मणः प्रवेशात् आत्मधारणानुकूलव्यापाररूपधात्वर्थेनात्मन उपसं-

ग्रहादित्यर्थः अथ वा (अन्तः) व्यापाराधिकरण एव (भावात्) फलस्य सत्त्वात् व्यापारसामानाधिकरण्यादित्यर्थः। तेन भुवादे-रुत्पत्त्यनुकूलव्यापारवाचितया धात्वर्थोपसंगृहीतकर्म्मकत्वाभावेऽपि फलसमानाधिकरणव्यापारवाचित्वादकर्म्मकत्वम्। अत एव

फलव्यापारयोरेकनिष्ठतायामकर्म्मकः।

धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृत इति।

फलसामानाधिकरण्यादिकृताकर्म्मकसकर्म्मकविभागोऽभिहितः (एकनिष्ठतायाम्) एकमात्रवृत्तितायामित्यर्थः तेन गम्यादे-र्व्यापाराधिकरणवृत्तिफलवाचित्वेऽपि नाकर्म्मकत्वमिति। (धर्म्मि-भेदे) अधिकरणान्यत्वे इत्यर्थः। एवमेव शब्दकौस्तुभकारा-दयः। एतन्मते सकर्म्मकाकर्म्मकशब्दौ पारिभाषिकाविति द्रष्ट-व्यम्। मञ्जुषाकृतस्तु "कर्म्मणा सहेति" "नास्ति कर्म्म यस्येति" च व्युत्पत्त्या सकर्म्मकाकर्म्मकशब्दौ यौगिकौ। तत्र साहित्यं तदन्वितस्वार्थबोधकत्वम् अन्वयश्च पृथक्पदोपस्थाप्ययोः सम्बन्धरूपो ग्राह्यस्तेन जीवत्यादीनां प्राणधारणानुकूलव्यापा-रार्थकतया तत्कर्म्मणः प्राणादेर्धात्वर्थमध्यपातात् न सकर्म्म-कत्वं धात्वर्थोपगृहीतकर्म्मकत्वेनाकर्म्मकत्वात्। कर्म्म च व्याकरण-शास्त्रीयपारिभाषिककर्म्मसंज्ञाविशिष्टमुच्यते तेनाधिशय्यते प्रासाद इत्यादौ कर्म्मणि लकारोपपत्तिः अधिशेतेः कर्म्म-संज्ञाविशिष्टान्वितस्वार्थबोधकत्वात् अन्यथा पूर्व्वमते तस्य फल-समानाधिकरणव्यापारबोधकतयाऽकर्म्मकत्वेन "भावे चाकर्म्म-केभ्यः" इति भाव एव लकारापत्तिः। भवति च ग्रामं गच्छती-

त्वादौ गम्यादिः ईप्सिततमत्वेन कर्म्मसंज्ञाविशिष्टेन पृथग्-भूतेन ग्रामेणान्वितं स्वार्थं बोधयन् सकर्म्मकः, अधिवसतिस्तु अधिकरणत्वेन कर्म्मसंज्ञाविशिष्टेनेति विवेक इति प्राञ्चः। युक्तञ्चैतत् धात्वर्थोपगृहीतकर्म्मकाणां व्यापारव्यधिकरणफल-वाचितया पूर्व्वकल्पे सकर्म्मकत्वापत्तिः तत्तद्भिन्नत्वेन निवेशे च गौरवं तथा कर्म्मणोऽविवक्षायां गम्यादेरपि अकर्म्मकत्वस्वीका-रेण अविवक्षाविशिष्टत्वेन निवेशे गौरवञ्च, एतन्मते तु कर्म्माभावादेव तदन्वितस्वार्थबोधकत्वाभावान्नाकर्म्मकत्वहानि-रिति। अत्र पक्षे अकर्म्मकस्तु तदनन्वितस्वार्थबोधक इति बोध्यम्।

सकर्म्मकाश्च द्विविधाः एककर्म्मका द्विकर्म्मकाश्च। एक-कर्म्मान्वितस्वार्थबोधकाः गम्यादयः एककर्म्मकाः। द्विकर्म्मका अपि द्विविधाः द्विकर्म्मान्वितैकव्यापारार्थकाः द्विकर्म्मान्वित-द्विव्यापारार्थकाश्च। तत्राद्या दुह्यादयः। न च ते सिद्धान्ते द्विव्यापारार्थकाः तथात्वे ईप्सिततमाभ्यामेव द्वाभ्यां कर्म्मभ्यां व्यापारद्वयेऽन्वयसम्भवेन द्वितीयाद्युत्पत्तौ "अकथितञ्च" इति सूत्रेण दुह्यादीनां कारकान्तरसंज्ञानापन्नस्याकथितस्य कर्म्मसंज्ञाविधानानौचित्यम्। दर्शयिष्यते च दुह्यादीनामेक-व्यापारार्थकता यदा पुनस्तेषां द्विव्यापारार्थकता विवक्षिता तदा ईप्सिततमसूत्रेणैव कर्म्मसंज्ञायां जातायां द्विकर्म्मान्वित-द्विव्यापारार्थका एव ते णिजन्तादिवदिति बोध्यम्। द्विकर्म्मा-न्वितद्विव्यापारार्थका णिजन्ताः तत्र च धातुना एकव्यापारोऽभि-

धीयते द्वितीयस्तु णिचा तद्व्यापारद्वये च ईप्सितकर्म्मणः प्रयोज्यकर्तृरूपकर्म्मणश्च यथाक्रममन्वयः। तथात्वञ्च गम्यादीनामिति बोध्यम्। पाचादीनां तु नैवं तद्योगे प्रयोज्यकर्त्तुः कर्म्मसंज्ञाभावेन व्यापारद्वये कर्म्मद्वयान्वयाभावात् न च पाचादेः क्रियाफलाश्रयत्वेनोद्देश्यतया प्रयोज्यकर्त्तुः कर्म्मसंज्ञा भवितुमर्हति गत्यादिधातुयोगे एव तन्नियमात्। उक्तञ्च हरिणा।

गुणक्रियायां स्वातन्त्र्यं प्रधाने कर्म्मतां गतम्।
नियमात् कर्म्मसंज्ञायाः स्वधर्म्मेणाभिधीयते इति।

(नियमात्) गतिबुद्ध्यादिसूत्रेण तदितरेषां निषेधात् (स्वातन्त्र्यम्) कर्तृत्वमेव (स्वधर्म्मेण) तृतीययाऽभिधीयते इति तदर्थः। वस्तुतस्तु प्रयोज्यकर्त्तुरीप्सिततमत्वेऽपि परत्वात् कर्तृसंज्ञया तस्य बाधात् कर्म्मत्वाप्रसक्तौ गत्यादिसूत्रेण अप्राप्तप्रापकत्वरूपविधित्वाश्रयेण गम्यादेः कर्म्मत्वं विहितं न पाचादेरिति द्रष्टव्यम्। उक्तञ्च हरिणा।

परत्वादन्तरङ्गत्वादुपजीव्यतयाऽपि च।
प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्व्विधितोचितेति।

(परत्वात्) "विप्रतिषेधे परं कार्य्यं" मित्युक्तेः

अपादानसम्प्रदानकरणाधारकर्म्मणाम्।
कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते।

इतिचोक्तेः (अन्तरङ्गत्वात्) पचादिरूपप्रकृत्याकाङ्क्षितकर्तृसंज्ञारूपकार्य्यत्वात् (अन्तरङ्गं बलीयः) इति न्यायात् पाचा-

द्याकाङ्क्षितकर्म्मसंज्ञाया: प्रत्ययाश्रितत्वेन दुर्ब्बलत्वादिति भाव: । (उपजीव्यतया) उपजीव्यजातीयतया सर्व्वेषामेव कारकाणां कर्त्तृप्रयोज्यत्वेन कर्त्तुरुपजीव्यजातीयत्वादिति फलितोऽर्थ: तेन पाच्याद्यपेक्षया तस्योपजीव्यत्वाभावेऽपि न क्षति: । एवं पाच्यादियोगे प्रयोज्यस्य कर्म्मसंज्ञाया एवाप्रवृत्ते: न द्विकर्म्मकत्वं तेषामित्यन्यत्र विस्तर: ।

अकर्म्मका अपि धातव: हेतुचतुष्टयाधीनाकर्म्मकक्रियार्थत्वात् चतुर्व्विधा: । अकर्म्मकक्रियात्वे हेतवश्च चत्वारो हरिणा प्रदर्शिता यथा ।

धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात् ।

प्रसिद्धेरविवक्षात: कर्म्मणोऽकर्म्मिका क्रियेति ।

(धातो:) स्वबोधकधातो: (अर्थान्तरे) स्वसजातीयभिन्ने (वृत्ते:) सामर्थ्यात् स्वविजातीयार्थबोधकत्वादित्येक: । यथा जानाति: ज्ञानं वदन् सकर्म्मक: प्रवृत्त्यादिकं बोधयन्नकर्म्मक: न तु गतिवाची गम्यादि: ज्ञानाद्यर्थेऽप्यकर्म्मक: तयोर्द्वयोरप्यर्थयो: सकर्म्मकत्वेन स्वसजातीयत्वात् । (धात्वर्थेनोपसंग्रहादिति) द्वितीय: । कर्म्मणो धात्वर्थेन उपसंग्रहात् स्वशरीरे प्रवेशनात् यथा जीवत्यादीनां प्राणधारणानुकूलव्यापाररूपक्रियार्थतया तत्कर्म्मण: प्राणादेर्धात्वर्थे एव प्रवेश: । (प्रसिद्धे:) सत्ता-लज्जादिरूपाणामकर्म्मकत्वेन प्रसिद्धे: । यथा

सत्तालज्जास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् ।
शयनक्रीड़ारुचिदीप्त्यर्थं धातुगणन्तमकर्म्मकमाहुरिति ।

परिगणितदिशा फलसमानाधिकरणव्यापारबोधकानामित्यर्थः। इति तृतीयो हेतुः। (कर्म्मणोऽविवक्षातः) इति चतुर्थः यथा गम्यादिरेव कर्म्माविवक्षातः अकर्म्मकः। अत्र च कर्म्मपदं व्यपदेशिवद्भावेन फलस्याप्युपलक्षणं तेन फलस्याविवक्षायामेव गम्यादेरकर्म्मकत्वमिति कौस्तुभानुसारिणः तेषाञ्च व्यापारमात्रबोधकत्वेन फलावाचित्वान्न सकर्म्मकत्वमिति द्रष्टव्यम्।

अत्र चाविवक्षा नाम येन रूपेणान्वयविवक्षया यस्य कर्मसंज्ञा तेन रूपेणान्वयविवक्षाभावः। अत्र क्वचित् कर्म्मणोऽविवक्षया, यथा पचते इत्यादौ, क्वचिच्च कर्म्मत्वाविवक्षया, यथा मातुः स्मर्य्यते इत्यादौ। अत्र मातुः कर्मत्वेनैव स्मरणान्वये कर्मसंज्ञा न पुनः सम्बन्धत्वेन तदन्वयेऽपि, सम्बन्धत्वेन विवक्षायामेव कर्मणि षष्ठीविधानात् स्मरणादेः कर्म्मान्वयसत्त्वेऽपि कर्मत्वेन तदन्वयाभावादकर्मकत्वं तेन भावे लकारादय इति बोध्यम्। क्वचित् तु कार्य्यप्रवृत्तिवेलायामविवक्षा पश्चाद्विवक्षा। यथा कृतपूर्व्वी कटम् भुक्तपूर्व्वी ओदनमित्यादौ। तथा हि कृतं पूर्व्वमनेनेति विग्रहे "पूर्व्वादिनिरिति अनेनेत्यर्थे पूर्व्वशब्दादिनिमनुवर्त्त्य "सपूर्व्वाच्चेति" सूत्रेण विद्यमानपूर्व्वात् पूर्व्वशब्दादपि इनिर्व्विहितः तत्र यदि कृतमिति कर्मणि क्तः स्यात् तदा तस्य कटादिरूपकर्मविशेषणतया सापेक्षत्वेन समासादिवृत्तिर्न स्यात् एकत्र विशेषणत्वेनोपस्थितस्यान्यत्र विशेषणतयान्वयायोगात् वृत्तिश्चात्र जायते भाष्यादिषु तथाप्रयोगादतोऽवश्यं प्रथमं कर्म्माविवक्षयाऽकर्म्म-

कत्वेन भावे क्तप्रत्यये विहिते तदन्तेन पूर्व्वादिभिः "सुपसुपेति" समासे च कृते तत्पूर्व्वकात् पूर्व्वशब्दात् कर्त्तरि इनिप्रत्ययो भवति। पश्चाच्च कर्त्तृकृतक्रियायाः कर्म्मविशेषाकाङ्क्षायां कटादिकर्म्मणोऽन्वयः। उक्तञ्च हरिणा।

अकर्म्मकत्वे सत्येव क्तान्ते भावाभिधायिनि।
पश्चात् क्रियावता कर्त्रा योगो भवति कर्म्मणाम्।
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्वादिषु स्थितेति।

क्रियावतेत्यनेन क्रियाद्वारैव कर्म्मणोऽन्वय इति द्योतितम्। क्रियायाश्च वृत्तिशब्दैकदेशतयाऽनन्वयशङ्कायामाहाविग्रहेति। नास्ति विशेषेण ग्रहो ज्ञानं यस्याः सा पृथगुपस्थित्यभावेन ज्ञातुमशक्येत्यर्थः (गतादिस्था) कर्त्तृबोधकनिष्ठान्तगतपदोपस्थाप्य गमनकर्त्तृरूपार्थप्रविष्टापि यथा ग्रामं गत इत्यादौ विभिन्नपदोपात्तैरपि (ग्रामादिकर्म्मभिः क्रिया सम्बध्यते) तथेत्यर्थः समुदायशक्तिस्वीकारे एकदेशान्वयाभ्युपगमादवयवशक्तिस्वीकारे तु तदनुपगमे चत्यभावादिति भावः। कृतपूर्व्वादिष्वित्यादिपदेनाध्वरेष्वित्यादयो गृह्यन्ते तत्रापि "इष्टादिभ्यश्चेत्यनेन कर्त्तरि इनिविधानात्। तच्चेदं बोध्यम्।

निष्पत्तिमात्रे कर्तृत्वं सर्व्वत्रैवास्ति कारके।

इत्युक्तेः कर्मणोऽपि स्वव्यापारद्वारा क्रियानिष्पत्तिहेतुत्वेन कर्तृत्वे स्थिते तद्व्यापारस्य धात्वर्थत्वविवक्षायां धात्वर्थक्रियाश्रयत्वेन तस्य कर्त्तृत्वं, समानानुपूर्व्वीकमुख्यार्थबोधकधातूपात्तफलाश्रयत्वेन च

कर्मत्वमित्येकस्यैव कर्मकर्तृता एवञ्च तत्र धातोरर्थान्तरे वृत्तेरे-वाकर्मकत्वम्। तथा हि अन्नं पच्यते स्वयमेवेत्यादौ विक्लित्तिस्त-दनुकूलोऽन्नस्याल्पादिसंयोगरूपो व्यापारश्च तद्विशिष्टो वा पच्यर्थः तयोः फलव्यापारयोरेकनिष्ठतया तद्बोधकधातोरकर्म-कत्वं तेन अन्नेन पच्यते स्वयमेवेत्यादौ भावे लकारोपपत्तिः। द्विकर्मकाणान्तु एककर्मणः कर्तृत्वविवक्षयाऽपरस्याविवक्षयै-वाकर्मकत्वं पचिदुह्योस्तु कर्मान्तरसत्त्वेऽपि कर्मवद्भावविधा-नात् सकर्मकत्वं तेन तयोर्न भावे लकारादयः किन्तु कर्म-ण्येव, तेन दुह्यते गवा दुग्धं स्वयमेवेत्यादि। एवञ्च सर्व्वेषामेव धातूनां कर्मणः कर्तृत्वविवक्षायां कर्मवद्भावे प्राप्ते धातुविशेष-योग एव कर्मवत्कार्य्यातिदेशः न सर्व्वधातुयोगे तेन गम्यादि-योगे कर्त्तरि वाच्ये न कर्मवद्भावः किन्तु कर्तृवत्कार्य्यं भावे तु दृष्यते एव कर्मवत्कार्य्यम्, पच्यादियोगे तु कर्त्तरि भावे च वाच्ये कर्मवद्भाव इति विवेकः। उक्तञ्च।

कर्मस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्मवत्।

कर्तृस्थेऽपि च धात्वर्थे कर्मकर्त्ता च कर्तृवदिति।

"कर्मवत्" कर्मवत्कार्य्यवानित्यर्थः अत एव "कर्मवत् कर्मणा तुल्यक्रिय" इति सूत्रे कर्मपदेन कर्मस्थक्रिया लक्षिता शास्त्रकारै-स्तेन कर्मस्थक्रियातुल्यक्रियावति कर्त्तरि कर्मवत् कार्य्यमि-त्यर्थः क्रिययोस्तुल्यत्वञ्च एकाधिकरणमात्रवृत्तित्वेन तथा च कर्मस्थक्रियया फलेन व्यापारस्य सामानाधिकरण्ये एव कर्म-वद्भावविधानात् पच्यादेस्तथाभूतार्थकतया तत्कर्त्तरि कर्म-

वत्कार्य्यं गम्यादेस्तु व्यापारस्योक्तफलसामानाधिकरण्याभावात् कर्तृस्वभावकत्वमिति कर्त्तृवदत्कार्य्यमिति विवेकः। तथा तुल्य-क्रिये कर्त्तरीत्यभिधानेन गम्यादीनामपि भावे कर्मवत्कार्य्यं यगादि भवत्येव। यद्यपि सर्व्वेषामेवाकर्मकाणां फलव्यापा-रयोः सामानाधिकरण्यबोधकतया कर्मवद्भावापत्तिस्तथापि सूत्रे कर्मणा तुल्येति निर्द्देशात् येषां धातूनां मुख्यार्थवाचिनां सकर्मकत्वं तेषामेव कर्मवद्भाव इति गम्यते अस्त्यादेश्च सत्तादि-रूपमुख्यार्थे सकर्मकत्वाभावात् न तत्प्रसङ्गः भवतेस्तु लाक्षणिकानुभवार्थे वर्त्तमानस्य सकर्मकत्वेऽपि सत्तारूप-मुख्यार्थे तथात्वाभावान्न प्रसङ्गः। एवञ्च सर्व्वेषामेव सकर्म-काणां कर्तृकर्मोभयस्वभावकत्वेनाव्यवस्थायां हरिणा क्रिया-कृतविशेषेण व्यवस्था दर्शिता। यथा

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
शब्दप्रवृत्तिरन्येषां शब्दैरेव प्रकल्पितेति।

(यत्र) कर्मणि कर्त्तरि वा (विशेषः) क्रियाकृतोऽसाधारणधर्मो दृश्यते (तत्रैव) क्रिया व्यवस्थितेत्यर्थः धात्वर्थयोः फलव्यापार-रूपयोः क्रिययोरुभयनिष्ठत्वेऽपि तत्कृतविशेषादेव तन्निष्ठत्व-व्यवहार इति भावः। विशेषश्च द्विविधः धातूपस्थाप्यः तदनु-पस्थाप्यश्च तत्राभ्यर्हितत्वेन उपस्थितत्वेन च धातूपात्तविशेषस्यैव प्रथमं ग्रहणं तदप्राप्तौ तु अपरस्येति विवेकः। तेन पचादयः स्वोपस्थाप्यस्य कर्त्रपेक्षयाऽसाधारणधर्मस्य व्यापाररूपक्रिया-कृतस्य विक्लित्तिरूपफलस्य बोधकाः कर्मस्वभावका एव गम्या-

द्वयस्तु नैवं, तदुपस्थाप्यफलस्य संयोगादेरुभयनिष्ठतया साधारण्यात् धातूपस्थाप्यविशेषासत्त्वे एव धात्वनुपस्थाप्यस्य क्रियाकृतस्य श्रमादिरूपासाधारणधर्मस्य ग्रहणं तस्य च कर्त्तरि दर्शनात् कर्तृस्थत्वम् । एवञ्च कर्तृस्थादिविभाग एतन्मते न्यायमूल एव । (अन्येषाम्) मते पुनः (शब्दप्रवृत्तिः) कर्मवत् कार्य्यप्रवृत्तिः (शब्दैरेव) नियामकशास्त्रैरेव (प्रकल्पितेति) द्रष्टव्यम् । तच्च शास्त्रं यथा

कर्मस्थः पचतेर्भावः कर्मस्थाश्च भिदादयः ।

कर्त्तृस्थो बुध्यतेर्भावः कर्त्तृस्थाश्च गमादय इति ।

(कर्मस्थाः) कर्मस्थक्रियार्थका इत्यर्थः एवमग्रेऽपि । सम्प्रदायविदस्तु एतच्छास्त्रमपि न्यायमूलकं पूर्व्वोक्तरीत्या एतेषां कर्मस्थत्वादिव्यवस्थापनात् अन्यथा प्रातिस्विकरूपेण तद्गणनस्य कर्त्तुमशक्यतयाऽव्यवस्थापत्तेरित्याहुः । एवञ्च क्रियाकृतविशेषेणैव क्रियाव्यवस्थेति पक्षमवलम्ब्य

निर्व्वर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते ।

न तु प्राप्ये कर्मणि तु सिद्धान्तोऽयं व्यवस्थितः ।

इत्यभियुक्तैर्व्यवस्था भङ्ग्यन्तरेण दर्शिता । तथा च निर्व्वर्त्त्यविकार्य्ययोरेव क्रियाकृतस्य उत्पत्त्यादिरूपस्य विशेषस्य सत्त्वात्, प्राप्ये तदसत्त्वाच्च तत्तत्र कर्मवद्भावाभावौ बोध्यौ "क्रियाकृतविशेषाणां सिद्धिर्यत्र न तिष्ठति" इत्यग्रिमप्राप्यकर्मलक्षणे प्राप्यस्य क्रियाकृतविशेषाभावकथनात् व्यतिरेकेण निर्व्वर्त्त्यविकार्य्ययोस्तत्सत्त्वमर्थायातमित्यलं विस्तरेण । इदन्तु

बोध्यम्, सनन्तधातूनां धात्वर्थेच्छार्थकत्वेन कर्तृस्थभावकत्वेऽपि तत्प्रकृतीभूतधातोरेव कर्मस्थकर्तृस्थभावकतया व्यवस्था तत्प्रकृतेरात्मनेपदादिना तदन्तस्यात्मनेपदादिवदिति। बोधस्तु कर्मकर्त्तरि कर्त्तरीव यथा ओदनः पच्यते स्वयमेवेत्यादौ ओदनाभिन्नैकाश्रयकविक्लित्त्यनुकूलस्थाल्यादिसंयोगरूपव्यापारः। अपरे तु कर्त्तुराश्रयांशे विशेषणत्ववत् व्युत्पत्तिवैचित्र्येण फलेऽपि विशेषणत्वमङ्गीचक्रुरङ्गीचक्रुश्चात नामार्थधात्वर्थयोरपि साक्षादन्वयम्। वस्तुतस्तु तिङर्थाश्रयस्यैव व्युत्पत्तिवैचित्र्येणोभयत्रान्वय इति द्रष्टव्यम्।

एवं धातुसामान्यलक्षणे तद्विभागे च दर्शिते इदानीं तदर्थौ निरूप्यते। सर्व्वेषां धातूनां फलं तदनुकूलो व्यापारश्चार्थ इति सिद्धान्तः "द्व्यर्थः पचिः" इति भाष्योक्तेः।

फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।

इत्युक्तेश्च न तु फलमात्रं धात्वर्थः, व्यापारस्त्वाख्यातार्थ इति कल्पनीयं, तथात्वे कृदादौ व्यापारबोधानुपपत्त्या तत्साकाङ्क्षकारकप्रयोगानुपपत्तेः प्रयुज्यते च कारकं सर्व्वैः, तथा ग्रामो गमनवानिति प्रयोगापत्तिः। प्रत्ययमात्रस्यापि न व्यापारवाचित्वमनेकेषां प्रत्ययानां तद्वाचकत्वकल्पनापेक्षया सर्व्वत्रैव धातोरेवान्वयव्यतिरेकाभ्यामेकरूपत्वात् लाघवाच्च वाचकत्वौचित्यात्। नापि व्यापारमात्रं धात्वर्थः फलं कर्मप्रत्ययार्थ इति कल्पनीयं, त्यजिगम्योः पर्य्यायतापत्तेः त्यज्यादौ

संयोगस्य, गम्यादौ च विभागस्य कर्मप्रत्ययेन बोधनापत्तेः गत्यादौ संयोगादिबोधने च गम्यादिसमभिव्याहारस्य हेतुत्वकल्पनापेक्षया गम्यादेरेव तदर्थत्वौचित्यात् । द्वितीयाषष्ठीचतुर्थीलकारादीनामनेकेषां फलवाचकत्वकल्पनापेक्षया धातोरेव तथात्वौचित्याच्च । तयोश्च पृथगेव शक्तिः किन्तु एकपदोपस्थितयोः परस्परं विशेष्यविशेषणभावेन विशिष्टबुद्धिकृदेति तेन कर्म्मादेराश्रयतया फलान्वयोपगमेन नैकदेशान्वयः विशिष्टशक्तिस्वीकारे तु तस्यैकदेशान्वयापत्तिः । तथा "फले प्रधानं व्यापारः" इत्युक्तेः सर्व्वत्रैव व्यापारस्य विशेष्यत्वं विशेषणत्वमितरस्य तयोश्च संसर्गः जन्यजनकत्वादिरूपः अत एव "क्रियाप्रधानम्" इत्याद्युक्तिरपि साधु सङ्गच्छते । तथा तिङर्थस्य आश्रयादेः सर्व्वथैव विशेषणत्वं तत्राप्ययं विवेकः तिङर्थाः खलु कालसंख्याकर्त्रादिरूपाश्चास्तेषां कालस्य व्यापार एव विशेषणत्वम् । "क्रियाभेदाय कालस्तु" इत्युक्तेः संख्या पुनराश्रयांशे विशेषणम् "संख्या सर्व्वस्य भेदिका" इति" प्रागुक्तेः सर्व्वस्येत्यनेनाश्रयस्य नानात्वसूचनात् आश्रयरूपाख्यातार्थस्य कर्त्तृलकारे व्यापारे, कर्मलकारे च फले विशेषणत्वेनान्वयस्वीकारेण तदंशे एव संख्यायाः विशेषणतौचित्यात् एकपदोपात्तयोरपि विशेष्यविशेषणभावान्वयाभ्युपगमात् । आश्रयरूपोऽर्थस्तु फलव्यापारयोर्व्विशेषणम् । "कर्त्तरि कृत्" इति "लः कर्म्मणि" इत्यादिसूत्राभ्यां लकारस्य व्यापाराश्रयरूपकर्त्तरि फलाश्रयरूपकर्म्मणि च शक्तिप्रतिपादनेऽपि

फलव्यापारयोर्धातुलभ्यत्वात् अन्यलभ्यत्वेन तदंशे शक्त्यनभ्युपगमात् आश्रयमात्रे एव तच्छक्तिस्वीकारः। एवं "कर्मणि द्वितीया" "कर्तृकरणयोस्तृतीया" इत्यादावपि कर्तृकर्मणोर्द्वितीयादेराश्रयमात्रोऽर्थः। एवञ्च तिङर्थाश्रयान्वितार्थकप्रातिपदिकात् प्रत्ययेनोक्तार्थत्वात् प्रथमा ततश्च यथा तिङर्थाश्रयेण सह कर्त्रादेरभेदान्वय एवं तृतीयाद्याश्रयेणापि, देवतादिप्रत्ययार्थ इव प्रकृत्यर्थस्याभेदेनान्वयाभ्युपगमात् "युष्मदि मध्यमः" इत्यादिसूत्रैर्युष्मदर्थसमानाधिकरण एव मध्यमादिपुरुषवचनलडादेर्विधानात् "लटः शतृशानचावप्रथमासमानाधिकरणे" इति सूत्रे चादेशस्याप्रथमासामानाधिकरण्यनिर्द्देशात् स्थानिनस्तथात्वावगमाच्च। एवञ्च तिङर्थाश्रयस्य फलव्यापारयोरन्वये तङ्परस्मैपदादयो द्योतकाः। उक्तञ्च हरिणा।

> फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।
> व्यापारे शम्शबाद्यास्तु द्योतयन्त्याश्रयान्वयम्।
> उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्य्ययात्।
> तस्माद् यथोचितं ज्ञेयं द्योतकत्वं यथागममिति।

कर्मकर्त्तरि विहितयगादेः कर्त्तरि विहितस्य बुध्यत्यादिभ्यश्चिणादेश्च फलान्वयद्योतकत्वापत्त्या यथागममित्युक्तं तथा च कर्मकर्त्तृविहितभावसाधारणविधिविहिततङादयः आश्रयस्य फलान्वयद्योतकाः तद्भिन्नाः व्यापारान्वयद्योतका इति फलितम्। तेन कर्त्तरि विहिततङादेर्न फलान्वयद्योतकत्वप्रसङ्गः

इति शब्दकौस्तुभानुसारिणः। मञ्जूषाकृतस्तु फलव्यापारयोः पृथक्शक्तिपक्षेऽपि कर्मप्रत्यये फलं, कर्तृप्रत्यये च व्यापारो विशेष्यतया भासते तथैवानुभवादेवञ्च विशिष्टशक्तिस्वीकारापेक्षया पृथक्शक्तिकल्पने लाघवमपि भवति तथा हि आनुभविकतया बोधस्योपपत्तये विशिष्टशक्तिवादिनां शक्तिद्वयकल्पनापत्तिः पृथक्शक्तिपक्षे तु व्युत्पत्तिवैचित्र्येण फलानुसारात् विशेष्यविशेषणभाववैपरीत्यमात्रं कल्प्यत इति बोध्यम् एवञ्च "क्रियाप्रधानम्" इत्युक्तिर्लक्षणया धात्वर्थप्रधानमित्यर्थपरा तथा च द्वयोरपि धात्वर्थतया प्रयोगानुसारेण तयोः प्राधान्याप्राधान्ये, तत्र च नियामकाः आश्रयस्य फलाद्यन्वयद्योतका एवेति प्राहुः। नव्यास्तु पृथक्शक्तिकल्पने तयोरुद्देश्यविधेयभावेनान्वयापत्तिः पृथगुपस्थितयोस्तथान्वयस्यौत्सर्गिकत्वात् नानुभूयते च तयोस्तथान्वय इति विशिष्टशक्तिं स्वीकृत्य व्यापारविशिष्टफलफलविशिष्टव्यापारयोर्बोधने कर्मकर्तृप्रत्ययोश्च द्योतकतामभ्युपेत्य द्विधैव धातोः शक्तिः "द्व्यर्थः पचि" रिति भाष्यस्यापि द्विविधार्थवत्ताप्रतिपादनपरत्वादित्याहुः।

तत्र फलतीति व्युत्पत्त्या फलं नाम तद्धात्वर्थजन्यम्, गम्यादौ विभागस्य फलत्ववारणाय धातूपस्थाप्यत्वेन विशेषणेऽपि विभागजन्यसंयोगस्य पतनफलत्वमते विभागस्य तद्धात्वर्थजन्यत्वात् तद्धातूपस्थाप्यत्वाद‌तिव्याप्तेस्तद्धात्वर्थे विशेषणतया भासमानत्वेनैव विशेषणीयं गम्यादौ च विभागस्य तद्धात्वर्थे विशेषणतया भासमानत्वाभावात् न फलत्वप्रसङ्गः। मञ्जूषा-

कन्मते तु कर्तृप्रत्ययस्थले तथा भासमानत्वमिति विवेकः। क्रियाविशेषणादेर्धात्वर्थे विशेषणत्वेऽपि तज्जन्यत्वाभावान्न फलत्वप्रसङ्गः विशेषणत्वञ्च साक्षादेव विवक्षितं तेन घटं करोतीत्यादौ घटादेः धात्वर्थक्रियाजन्यस्य विभक्त्यर्थद्वारा तद्विशेषणत्वेऽपि न फलत्वापत्तिः।

व्यापारस्तु पूर्व्वोक्ता क्रियासमुदायात्मिका भावना तस्य च तत्तत्क्रियात्वरूपेण, फुत्कारत्वादिनैव बोधः। न तु व्यापारत्वरूपेण, यत्नसाधारणस्य तस्यैकस्यानुगतरूपस्यासत्त्वात् तत्तत्क्रियात्वादीनां नानात्वेऽपि एकबुद्धिविषयतया तेषामैक्यारोपादेकत्वव्यवहारः।

"यावत् सिद्धमसिद्धं वा" इति "गुणभूतैरवयवैः" इति च वाक्यपदीयोक्तेः एकैकावयवेऽपि समूहारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः। यद्वा यावत्क्रियाव्यक्तिवृत्तिजातिरेव व्यापार इति बोध्यं प्रतिपादितञ्च तस्याः क्रियात्वं साध्यत्वञ्च प्रागिति दिक्।

इदन्तु बोध्यं सर्व्वेषां कारकाणां क्रियायां विशेषणत्वस्वीकारेऽपि हिरुगाद्यव्ययार्थक्रियायां न तेषामन्वयः तद्बोध्यक्रियायाः साध्यरूपत्वाभावात् साध्येष्वेव साधनान्वयनियमात् तेषां क्रियाप्रधानत्वव्यवहारस्तु क्रियामात्रविशेषणार्थकत्वात् स्वरादीनां तु स्वःपतिरित्यादौ नामार्थेऽप्यन्विताऽर्थकतया तथात्वाभावादतो हिरुगादीनां सिद्धरूपक्रियाबोधकत्वमित्यवगन्तव्यम्।

एवं सामान्यतो धात्वर्थे निरूपिते इदानीं केषाञ्चिद्धातु-विशेषाणामर्थः प्रदर्श्यते केषाञ्चिच्च कारकादिनिरूपणावसरे वक्ष्यते। तत्र भवत्यस्त्यादीनां सत्ता, आत्मधारणञ्चार्थस्तच्चाने-ककालस्थायि कालगतपौर्व्वापर्य्येण क्रमवच्चेति तस्य क्रियात्वम्। आत्मधारणञ्च स्वरूपधारणं तत्र आत्मा स्वरूपं च सत्त्वैव। एवञ्च फलव्यापारयोरेकनिष्ठत्वादकर्मकत्वं व्यतिषे इत्याद्यात्मनेपददर्शनात् तेषां क्रियावाचकत्वमवगम्यते कर्म-व्यतीहारे आत्मनेपदविधानात् कर्मपदेन च तत्र स्थले क्रियाया एव ग्रहणात् न च फलस्य व्यतिहारः सम्भवतीति भाष्यादौ स्पष्टम्। उत्पत्त्यनुकूलो व्यापारो भवतेरर्थः स च व्यापारः साध्यत्वेनाभिधीयमानाश्रयता। पचेर्व्विक्लित्त्य-नुकूलव्यापारः स चानेकविध इत्युक्तम्। नश्यतेरदर्शनानुकूलो व्यापारः स च ध्वंससामग्रीसम्बन्धः व्यवधानसामग्रीसम्बन्धश्च। एवञ्च व्यापारे कालान्वयोपगमात् नाशस्यातीतत्वाभावेऽपि नष्ट-इत्यादिप्रयोगोपपत्तिः। ध्वंसश्च कारणे तिरोभावावस्था, कारणशक्तिस्वरूपेणावस्थानन्तु प्रागभावः ततः प्रच्युताऽभि-व्यक्तिलक्षणधर्ममापन्ना व्यक्तिरित्युच्यते इति सिद्धान्तः। जानातेर्विषयतया ज्ञानं फलमात्ममनःसंयोगो व्यापारोऽर्थः। अतो मनो जानातीत्याद्युपपत्तिः आत्मानं जानातीत्यादौ तु शरीरावच्छिन्नात्मनः कर्मत्वम्, अन्तःकरणावच्छिन्नस्य तु कर्तृत्व मिति "कर्मवदिति" सूत्रे भाष्ये स्पष्टम्। इदमेव ज्ञानरूपं फलं चक्षुरादिकरणकत्वेन विवक्षितं दृशादेरर्थः। तथा हि चक्षु-

र्ज्जन्यं ज्ञानं दृशेरर्थः, श्रोत्रजन्यं शृणोतेः, घ्राणजन्यं जिघ्रतेः, रसनाजन्यं रसतेः, त्वगजन्यं स्पृशतेः, मनोमात्रजन्यं मन्यतेः, लिङ्गादिज्ञानजन्यमनुमिनोतेः, शब्दजन्यं शृणोतेः, भावनाख्यसंस्कारजन्यं स्मरतेः, संस्कारेन्द्रियसन्निकर्षजन्यं प्रत्यभिजानातेः, एवं तत्तत्समानार्थकधातोरर्थः व्यापारस्तु सर्व्वत्रैकरूपः पूर्व्वोक्त एव। तथा ज्ञानस्य वेद्यविशेषगोचरत्वे हेतुविशेषजन्यत्वे च संशेत्यादेः विभेत्यादेश्चार्थत्वम्। यथा विरुद्धद्वयप्रकारकैकविशेष्यकं ज्ञानं संशेतेः, संशयान्यज्ञानं निश्चिनोतेः, अबाधितविषयकं प्रमिणोतेः, बाधितविषयकं ज्ञानं भ्राम्यतेः, गौरवहेतुकं ज्ञानं संमन्यतेः, अपकर्षहेतुकं ज्ञानमवजानातेः; मोहभयादेरपि ज्ञानेऽन्तर्भावः, दर्शयिष्यते च विभेत्यादीनामर्थः कारके इत्यलम्। इच्छतेर्विषयतया इच्छा फलं व्यापारस्तु तदनुकूलज्ञानमिष्टसाधनत्वादिविषयकम्। इयञ्चेच्छा नानाविधा। भोज्यविषयिणी रुचिरूपा, योषिदादिविषयिणी कामानुरागादिरूपा, सामान्यभोग्यविषयिणी अभिलाषरूपा, औत्सुक्यहेतुका भोज्यादिविषयिणी लालसारूपा, तत्तद्वाचकधातवस्तु रोचत्यादय एवमन्येऽपि विशेषेच्छार्थका अवसरे दर्शयिष्यन्ते। यततेः समवायेन यत्नः फलम्, आत्ममनःसंयोगस्तु व्यापारस्तेन फलव्यापारयोरेकनिष्ठत्वादकर्मकः विषयतया फलबोधने अस्य निराकाङ्क्षत्वात् न सकर्मकत्वम्। एवं प्रवर्त्ततेर्निवर्त्ततेश्च बोध्यम्। करोतेस्तु उत्पत्त्यनुकूलव्यापारार्थकत्वात् न सकर्मकत्वहानिः, यत्नार्थकत्वेऽकर्मकत्वापत्तिः। उक्तञ्च।

क्रञोऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते।

युक्तञ्चैतत् क्रञो यत्नमात्रार्थकत्वे कर्तृस्थभावकतया ततः कर्मकर्त्तरि कर्मवत् कार्य्यानुपपत्तिः भवति च क्रियते घटः स्वयमेवेति प्रयोगः शास्त्रसम्मतोऽतोऽवश्यम् उत्पत्त्यनुकूलो व्यापारः करोत्यर्थः स्वीकार्य्यः उत्पत्तिरूपफलस्य कर्मस्थतया कर्मवद्भाव उपपद्यते इति। विषयतया द्वेषः फलं, व्यापारश्चात्ममनः संयोगादिरूपो द्विषेरर्थः। द्वेषस्तु दुःखसाधनताधीजन्योऽप्रीतिजनकश्चित्तवृत्तिविशेषः। संयोगस्तदनुकूलव्यापारश्च तद्विशिष्टो वा गम्यादेरर्थः संयोगश्च नानाहेतुकत्वेन नानाधिकरणकत्वेन च नानाविधः। ततश्च तत्तत्संयोगफलबोधकानां सर्व्वेषामेव धातूनां गत्यर्थतावसेया। तथा हि पूर्व्वदेशसंयोगनाशानन्तरोत्तरदेशसंयोगो गमेः फलं, वहिर्व्विभागजन्याभ्यन्तरसंयोगः प्रविशेः। द्रवद्रव्यकरणकसंयोगः सिचेः। जलं सिञ्चतीत्यादौ तु विजातीयसंयोगावच्छिन्ने लक्षणा। एवं सुरभ्यादिद्रव्यकरणकसंयोगो लिपेः। स्नेहद्रव्यकरणकसंयोगो मर्द्दयतेः। सर्व्वशरीरसंयोगो मज्जतेः। ऊर्द्ध्वदेशसंयोग उत्क्षिपतेः अधःसंयोगोऽवक्षिपतेः फलं, बोध्यमेवमन्येषामपि भ्रम्यादीनां गत्यर्थत्वमवसेयम्। विभागजन्यसंयोगः क्रिया च पतेरर्थः क्रियामात्रन्त्वपरे तदर्थमाहुः। विभागजनकक्रिया त्यज्यादेरर्थः। अवयवविभागावच्छिन्ना तु भिद्यादेरर्थः। द्विकर्मकाणान्तु कारकेऽर्थो निरूपयिष्यन्ते इति दिङ्मात्रम् प्रदर्शितमाकरे तु विस्तरः।

प्रातिस्विकरूपेण सर्व्वेषां धातूनामर्थनिरूपणस्य वाहुल्यात् कर्त्तुमशक्यतयाऽधुना कतिचिदर्थो एव निरूप्यन्ते। पराभिभवेच्छा स्पर्द्धाऽकर्मिका अभिभवेच्छामात्रविवक्षायां सकर्मिका परदुःखप्रहरणेच्छा दयाऽकर्मिका। निर्द्दोषत्वेनाभिमानो विश्वासः, स्वावधिकोत्कर्षज्ञापनं नमनं सकर्मकं, स्वावधिकोत्कर्षस्य विषयतया सामानाधिकरण्येन चोभयसम्बन्धेन विशेषणत्वं तेन नोदासीनस्य तत्कर्मत्वं ज्ञापनव्यापारश्च करशिरःसंयोगादिरूपो नानाविधः। मेध्यानाड़ीसंयोगः शय्यासंयोगश्च स्वापः। निद्रा शयनमपि तथा, स्वापाभावो जागरणम्। मुखविकाशो हासः। क्रियामात्रं स्पन्दनं, चलनं, कम्पनञ्च। यत्नजन्यक्रिया चेष्टा एतेऽकर्मकाः। आस्वादनं रसानुभवो रुचिश्च यथाक्रमं सकर्मकोऽकर्मकश्च। जिह्वाकरणको रसानुभवो लेहनम्, आकर्षणपूर्व्वकः, स एव चोषणं, दन्तकरणकः स एव चर्व्वणमिति विवेकः। मोदादयः आनन्दविशेषाश्चित्तस्य परिणामाः अकर्मकाः। काठिन्यशैथिल्ये आरम्भकसंयोगवृत्ती धर्मविशेषौ मृदुत्वतीक्ष्णत्वादयः स्पर्शवृत्तयः धर्मविशेषाः। एते च तन्मात्रार्थकत्वेऽकर्मकास्तत्करणार्थकत्वे सकर्मकाः। अविद्यमानात्मगुणज्ञापनं श्लाघा। अभिमानहेतुकं शब्दद्वारा तज्ज्ञापनं विकत्थनम्। भेदनानुकूलव्यापारो लेखनं संस्थानविशेषरचनमपि। हिंसाहेतुको दन्तकरणकः संयोगानुकूलो व्यापारो दंशनम्, रागहेतुकोऽधरकरणकः स एव चुम्बनम्। गलविलाधःसंयोगानुकूलो

व्यापारो भोजनं, द्रवद्रव्यकर्मकं तदेव पानम्। गलबिलाव धिकोर्द्ध्वसंयोगजनको व्यापारो वमनमुद्गिरणञ्च, दोषाविष्करणं निन्दा, गुणाविष्करणं प्रशंसनम्, एतौ व्यापारौ प्रायशः शब्दरूपौ कथनेनैव हि सर्व्वं दोषादिकं प्रकटीकुर्व्वन्ति एते च सर्व्वे सकर्म्मकाः। दोषत्यागः शुद्धिः उभयोरेकाश्रयत्वादकर्म्मिका तत्करणविवक्षायां सकर्म्मिका। शोभाविशेषोत्पत्तिर्मण्डनम् अकर्म्मकं तत्करणविवक्षायां सकर्म्मकम्, गर्व्वहेतुकाभिमानोऽहङ्कारश्चित्तवृत्तिविशेषः अकर्म्मकः। इतरभेदज्ञापनं विशेषणं लक्षणञ्च। याथातथ्येन ज्ञापनं निरूपणं, साकल्येनाभिसम्बन्धः व्याप्तिः, साध्यविशिष्टतया धर्म्मिनिर्द्देशः प्रतिज्ञा एते सकर्मकाः। त्यागकरणको व्यापारो यागः, त्यागश्च स्वत्वध्वंसानुकूलो व्यापारः, तत्रैव च सर्व्वेषां कारकाणामन्वयाभ्युपगमात् तस्यापि व्यापाररूपत्वसत्त्वात् देवादेश्च तत्र त्यागे विवक्षया कर्म्मत्वं द्रव्यादीनां च करणत्वं बोध्यम्। त्यागस्य करणत्वञ्च स्वर्गादिफलानुकूलव्यापारे इति विवेकः। त्यागस्य च व्यापारे करणत्वात् तद्विशेषणस्याऽश्वमेधादेरपि करणत्वं तेनाश्वमेधेन यजेतेत्यादौ अश्वमेधपदात् तृतीयाऽश्वमेधपदेन च तत्तदितिकर्त्तव्यताविशिष्टोऽभिधीयते। स्वत्वध्वंसानुकूलो व्यापारस्त्यागस्तत्र द्रव्यादीनां कर्म्मत्वं देवादेश्चोद्देश्यत्वात् सम्प्रदानत्वम्। द्रवद्रव्यकरणकारम्भकसंयोगशैथिल्यापादनं विक्लेदनम्। द्रवद्रव्यानिःसरणपूर्व्वकतत्काठिन्यापादनं शोषणम्। रज्ज्वादि-

करणकगत्यादिरोधहेतुसंयोगानुकूलव्यापारो बन्धनं, विषयविशेषे व्यवस्थापनं नियमनम्। प्रीत्यनुकूलो व्यापारो भजनम्। प्राणवियोगानुकूलव्यापारो हननं विभागजनकव्यापारो मोचनं विभजनञ्च एतानि सकर्मकाणि। अत्यन्तानलसंयोगजन्यनाशो दाहोऽकर्म्मक स्तत्करणविवक्षायां सकर्मकः। मादकद्रव्यादिहेतुकश्चित्तविक्षेपभेदा मादोन्मादप्रभृतयः। गतिनिवृत्तिः स्थितिः, वृद्धिरुपचयः, ह्रानिरपचयः, आत्मनि निन्दितत्वज्ञानाधीनश्चित्तवृत्तिविशेषो लज्जा। हर्षजनकहस्तादिविक्षेपः क्रीड़ा। विषयत्वापत्तिः प्रकाशः, विषयाभिलाषो रागस्तदनभिलाषो विरागो विरतिश्च, द्रवहेतुकक्रियाविशेषः स्यन्दनमेतान्यकर्मकाणि। एवञ्च गणनिर्द्दिष्टधातूनां तत्तदर्थेषु शक्तिर्लक्षणा पुनरर्थान्तरेषु अत एव "अनेकार्था हि धातव" इत्यभियुक्तोक्तिरपि लक्ष्यार्थविषयेत्याकरे स्पष्टम्।

इदानीं प्रत्ययान्तधातूनामर्था निरूप्यन्ते तत्र स्वार्थिकप्रत्ययानां गुपादिभ्यो विहितानां सन्प्रभृतीनां धात्वर्थस्वरूपमेवार्थस्तत्र च प्रकृत्यर्थस्याभेदेनान्वयः। उक्तञ्च हरिणा।

स्वार्थिकाः प्रत्ययाः केचित् प्रकृत्यर्थानुवादिन इति।

प्रकृत्यर्थानुवादकत्वञ्च तत्तत्स्वरूपाभिधायकत्वं नातो घटो घट इतिवत् प्रकृतिप्रत्ययार्थयोस्तयोरयोग्यतापत्तिरिति द्रष्टव्यम्।

"धातोः कर्मणः समानकर्त्तृकादिच्छायां वा" इति सूत्रेण इषिकर्मण एषितृकर्त्तृकात् धातोरिच्छार्थे सन् वा स्यादित्यर्थकेन विहितस्सन इच्छार्थस्तत्र च धात्वर्थस्य कर्म्मतया समानाधिकरण्येन चोभयसम्बन्धेनान्वयः तेन पाकेन भोजनेच्छायां परकर्त्तृकपाकेच्छायाञ्च पिपक्षतीति न प्रयोगः। एवञ्च सनन्तस्य धात्वर्थोपगृहीतकर्मकतयाऽकर्म्मकत्वेऽपि सनन्तस्य स्वप्रकृतिधातोस्तङादिना तङादिमत्त्ववत् तत्सकर्मकत्वाकर्मकत्वाभ्यां सकर्मकत्वाकर्मकत्वे बोध्ये तेन चैत्रेणौदनो बुभुक्ष्यते, मैत्रेण सुषुप्स्यते इत्यादौ कर्मणि भावे च लकारोपपत्तिः। तथा हि सनर्थविशेषणे धात्वर्थे कर्मणोऽन्वयेऽपि तत्पारतन्त्र्येणेच्छायामप्यन्वयात् कर्म्मान्वितस्वार्थबोधकत्वरूपसकर्मकत्त्वाच्चतेराद्ये कर्मणि लकारः, द्वितीये तु कर्म्माभावेन सन्प्रकृतिधात्वर्थेऽपि कर्म्मानन्वयात् अकर्मकतया भावे इति विवेकः। वस्तुतस्तु पारतन्त्र्येण धात्वर्थकर्म्मणः सनर्थेच्छान्वयेऽपि न तस्य सनन्तोत्तरलकारादिनिमित्तकार्य्यप्रसङ्गः तत्प्रकृतिनिमित्तककार्य्यस्य द्वितीयादेरन्तरङ्गकार्य्यत्वेन बलवत्त्वात् तेन समं लकारयोगाभावेन च न द्वितीयाया बाधः एवञ्च तत्प्रयोगोपपत्तये फलव्यापारयोर्व्विशेष्यविशेषणभाववैपरीत्यवत् सनन्तेऽपि तथास्वीकारेण कर्मप्रत्यये इच्छाविषयधात्वर्थ एव सनन्तार्थः ततश्च तादृशधात्वर्थान्वितकर्म्मलकाराद्यर्थान्वितार्थकत्वेनौदनादेः प्रथमोपपत्तिः। कालादिरूपाख्यातार्थस्तु इच्छायामेवान्वेतीति विशेषः। बोधस्तु

ओदनाभिन्नैकाश्रयकं चैत्राश्रयकवर्त्तमानेच्छाकर्मभोजनमित्येवं रूपः।

"आशङ्कायामचेतनेषूपसंख्यान" मिति विहितसन आशङ्कार्थः तत्र च धात्वर्थस्य कर्मतामात्रसम्बन्धेनान्वयः, आख्यातार्थस्याश्रयोऽत्र विशेष्यतासम्बन्धेन ग्राह्यस्तेन कूलं पिपतिषतीत्यादौ कूलाभिन्नैकविशेष्यकवर्त्तमानपतनसन्देह इत्येवंरूपो बोधः। सन्देहस्तत्र प्रयोक्तुरेवातो धात्वर्थस्य तत्सामानाधिकरण्याभावात् कर्मतामात्रेणान्वयः कल्प्यते इत्यवधेयम्।

"सुप आत्मनः क्य" जिति विहितक्यच इच्छार्थः तत्र च प्रकृत्यर्थस्य कर्मतासामानाधिकरण्याभ्यामन्वयः कर्मण इत्यस्यानुवृत्त्या तस्य सुबन्तेन सहाभेदेनान्वयात् आत्मन इत्यस्य सम्बन्धितया सुबन्ते एवान्वयाच्च आत्मसम्बन्धिसुबन्तात् कर्मरूपादिच्छार्थे क्यजिति सूत्रार्थलाभेन तथान्वयौचित्यात् सामानाधिकरण्यञ्चात्र स्वसम्बन्धिवृत्तित्वं ग्राह्यमेवञ्च देवदत्तपुत्रमिच्छति स्वपुत्रेण च सुखमिच्छतीत्यादिविग्रहे पुत्रीयतीत्यादिर्न प्रयोगः इच्छायां देवदत्तपुत्रसामानाधिकरण्याभावात् पूर्व्वत्र, उत्तरत्र च स्वपुत्रस्य कर्मत्वाभावात्। गुरुपुत्रमिच्छतीतिविग्रहे तु नामार्थैकदेशस्यैषित्वसम्बन्धितया क्यजर्थे तदन्वयसम्भवात् क्यजादय उत्पद्यन्ते गुरोः पुत्रमिच्छतीत्यादौ तु नैवं, क्यच्प्रकृतिनामार्थस्यैकदेशस्यापि एषित्वसम्बन्धित्वाभावेन तत्र निरुक्तसम्बन्धेनान्वयेऽयोग्यत्वात्। यद्यपि क्यजाद्यन्तस्य गृहीतकर्मकत्वेनाकर्मकत्वेऽपि सनन्तस्येव स्वप्रकृतेः सकर्मकत्वेन

सकर्मकत्वापत्तिस्तथा च ओदनस्य पाकमात्मन इच्छतीति विग्रहे ओदनस्य पाकीयतीति वृत्तौ ओदनादेर्द्वितीयापत्तिः ओदनादेः पाकादावन्वयेऽपि पारतन्त्र्येण क्यजर्थेऽन्वयात् तथापि सम्बन्धषष्ठ्या अन्तरङ्गकार्य्यत्वेन बलवत्त्वात् तया द्वितीयाया बाध इत्यवधेयम्। अत्र च सनन्तवत् प्रकृति-प्रत्ययार्थयोर्विशेष्यविशेषणभाववैपरीत्यमपि न सम्भवति धातोरेव पृथक्शक्तिकल्पनेन तथात्वस्वीकारात् क्यजन्तस्य धातुत्वेऽपि तत्प्रकृतेर्नामत्वात् नामार्थस्य तथात्वाकल्पनादितिदिक्। "अशनायोदन्य" इत्यादिना, निपातितक्यजन्तस्थले अशनस्य सद्योभोजने उदकस्योदकपाने धनस्य धनग्रहणे लक्षणा तेषाञ्चैषिकसम्बन्धितया क्यजर्थेऽन्वयसम्भवः। एतेषाञ्चाकर्मकत्वेऽपि "जीवितुं किमु धनं धनायितु" मितिभारविप्रयोगे धनायाशब्दस्य इच्छामात्रे लक्षणया सकर्मकत्वमिति बोध्यम् कोषादौ च "उदन्या तु पिपासा तृट्" इत्यादौ पानेच्छामात्रे उदन्याशब्दस्य लक्षणेति बोध्यम्। तथा वृषाश्वाद्युक्तरसुगन्तक्यजर्थ इच्छैव वृषादेः तन्मैथुने लवणक्षीरादेश्च लालसाविषयभोजने लक्षणा तेनात्मसम्बन्धितया तेषां कर्मतादिसम्बन्धेन क्यजर्थेऽन्वयसम्भव इति विवेचनीयम्। अत्रापि वृषाश्वादिपदार्थाविवक्षया समुदायेन रिरंसा लक्ष्यते तेन "ततो रामीवृषस्यन्तीमित्यादि रामायणं" "वृषस्यन्ती तु कामुकीति" कोषश्च सङ्गच्छते। एवं "काम्यच" इति विहित काम्यच इच्छार्थः अन्वयादिकं तु क्यजन्तवद्बोध्यम्। बोधस्तूभयत्र स्वसम्बन्धिपुत्त्रादिकर्मकवर्त्तमानेच्छेत्येवं रूपः।

"उपमानादाचारे" इति विहितक्यच आचारसदृशाचारोऽर्थः तत्र प्रथमाचारे प्रकृत्यर्थस्य कर्मतयान्वयः कर्मण इत्यस्यानुवृत्त्या उपमानेऽभेदेनान्वयेन सूत्रार्थतस्तथान्वयलाभात्। आचारश्च प्रतिपाल्यत्वादिना ज्ञानरूपोऽन्नपानीयादिना सम्बर्द्धनतोषणादिलक्षणो वा ग्राह्यः। तेनायं धातुः सकर्मकः द्वितीयाचारस्य कर्मान्वितार्थकत्वात् तेन पुत्रमिवाचरति भृत्यमिति विग्रहे पुत्रीयति भृत्यमिति प्रयोगः। बोधस्तु भृत्यकर्मकः पुत्रकर्मकाचारसदृशाचार इत्येवं विधः। एव "अधिकरणाच्च" इति विहिताधिकरणोपमानोत्तरक्यचः आचारसदृशाचारएवार्थः प्रथमाचारे च प्रकृत्यर्थस्याधिकरणतयान्वयस्तेन प्रासादीयति कुट्यामित्यादौ प्रासादाधिकरणकवासादिरूपाचारसदृशकुट्यधिकरणकाचार इति बोधः अयं पुनः वासरूपस्तेनाकर्मक इति विशेषः।

"कर्त्तुः क्यङ्गिति" विहितक्यङोऽपि सएवार्थस्तत्र च प्रथमाचारे नामार्थस्योपमानस्य कर्त्तृतयान्वयो, द्वितीये तु उपमेयस्याख्यातार्थद्वारान्वयः। अयमप्यकर्मकः। बोधस्तु काकायते श्येनइत्यादौ काककर्त्तृकवञ्चनादिकाचारसदृशश्येनकर्त्तृकवञ्चनाद्याचार इति। एवमाचारविहितक्विपोप्यर्थान्वयादिरनयैव दिशावसेयः।

भृशादिभ्योविहितक्यङोऽभूततद्भावोऽर्थः अभूतस्य पूर्व्वं तथात्वेनानुत्पन्नस्य तद्भावस्तद्रूपेणोत्पत्तिरभूततद्भावः। यद्यप्युत्पन्नस्य पुनरुद्भवाभावेनोत्पत्तिमात्रार्थकत्वेऽपि क्यङो

न किञ्चिद्दूषणमावहति तथापि प्रत्ययस्य तावदर्थकत्व-कथनात् तद्रूपेणैव भानं तत्र तत्रेत्यवगम्यते इति बोध्यम् तथाचाभृशो भृशो भवतीति विग्रहे भावपूर्व्वकभावो भवत्यर्थ-स्तत्राद्ये भावे अभृशस्य द्वितीये च भृशस्याख्यातार्थद्वारान्वयः भावश्चात्रासाधारणधर्म्मविशेषस्तेनाभृशाश्रयकाभृशत्वरूपभाव-पूर्व्वकभृशाश्रयकभृशत्वरूपभावानुकूलभावनेति बोधः भृशायते इत्यादिवृत्तावपि तथाबोधस्यैवोचितत्वेन भावपूर्व्वकभाव एव क्यङर्थ इति कल्प्यते तत्र च प्रथमे भावे प्रकृत्यर्थस्य स्वभिन्न-वृत्तित्वसम्बन्धेन द्वितीये चाश्रयतयाऽन्वयात् भृशाश्रयकाभृश-वृत्तिभावपूर्व्वकभृशभावानुकूलभावनेति बोधः। यद्यप्यस्तिकरो-त्योरपि उत्पत्तिबोधकत्वेन तद्बोध्याभूततद्भावे च्चिप्रत्ययादिवत् क्यङः साधुत्वमापद्येत तथापि सूत्रे भुवीति निर्द्देशात् भवति-बोध्यतादृशार्थ एव साधुत्वमिति कल्प्यते तेनायमकर्म्मकः।

एवं लोहितादिभ्यो विहितक्यषोऽपि अर्थान्वयादिरनयैव दिशा बोध्यः।

अत्रेदं बोध्यम्। कर्त्तुरुपमानात् क्यङो विधानात् उप-मानरूपकर्त्तुः प्रकृत्यर्थस्य प्रत्ययार्थे विशेषणतयान्वयस्वीकारौ-चित्येन एतत्समानार्थकविग्रहवाक्येऽपि उपमानरूपकर्त्तुः तत्तत्क्रियादिरूपाचारे विशेषणत्वौचित्यमेवञ्च यस्योपमानं यद्रूपेण यत्रान्वेति स उपमेयस्तद्रूपेण तत्सदृश एवान्वेतीति नियमेन उपमेयस्यापि वृत्तिविग्रहयोः क्रियायां विशेषणत्वे-नान्वयो युक्तस्तथा च देव इवाचरति राजेति विग्रहे देवकर्त्तृ-

काचारसदृशो राजकर्तृकाचार इति बोधः इवशब्दस्य तात्पर्य्यग्राहकत्वमात्रकल्पनयाचरेरेवाचारसदृशाचारबोधकत्वाभ्युपगमेन प्रथमाचारे आख्यातार्थाश्रयद्वारा देवादेर्द्वितीयाचारे च तथैव राजादेरन्वयस्वीकारात् तत्रोभयवाचकपदाभ्यां प्रथमोपपत्तिः। देवादिशब्दस्य देवादिसदृशे लक्षणास्वीकारेण तस्य च राजादावभेदान्वयोपगमस्तु न युक्तः येन केनचिद्धर्म्मेण देवसदृशे राजनि तथा प्रयोगापत्तेः तथा विग्रहे यथा कथञ्चिद्रूपेणातिप्रसङ्गादिवारणसम्भवेऽपि वृत्तौ देवादेराचारे एव विशेषणत्वोपगमेन विग्रहेऽपि तथात्वौचित्यात् वृत्तिविग्रहयोस्तुल्यार्थकत्वात् अन्यथा देवादेः राजविशेषणत्वेनोपस्थितस्याचारादावन्वयासम्भवेनासामर्थ्येन वृत्त्यनुत्पत्तेः। एवञ्चैतत् सूत्रं क्रियामुख्यविशेष्यकान्वयबोधाभ्युपगममनुगृह्णातीति गम्यते। तथा भृशादिभ्यो भवत्यर्थकाभूततद्भावे विहितस्य क्यङोऽर्थे प्रकृत्यर्थस्य विशेषणत्वौचित्येन वृत्तौ तदर्थभावविशेष्यकबोधदर्शनात् विग्रहेऽपि तथाकल्पनया क्रियामुख्यविशेष्यकबोध एवाङ्गीक्रियते। तथा हि अभृशो भृशो भवतीति विग्रहे भृशाभृशयोरुभयोरपि भवत्यर्थान्वितकर्त्तृरूपाख्यातार्थाश्रययोरभेदेनान्वयात् कर्त्तृतया लकारेणोक्तार्थत्वात् तद्बोधकपदाभ्यां प्रथमा न तु भृशाभृशयोरेवाभेदान्वयः कल्प्योऽयोग्यत्वात् कथञ्चित् लक्षणया तद्व्यवस्थापनेऽपि भृशादिविशेषणत्वेन प्रथमोपपत्तिकल्पने च वृत्तौ भृशाभृशयोरुभयोरपि क्यङर्थे एव विशेषणत्वदर्शनेन विग्रहे-

ऽपि तथाकल्पनौचित्यात्। नापि विग्रहे तयोरेकस्य कर्त्तृ-त्वमपरस्य धात्वर्थे साक्षादाश्रयत्वादिसम्बन्धेनान्वयः कल्प्यः नामार्थधात्वर्थयोः साक्षादन्वयस्य क्वचिदप्यदर्शनात् अत्र अन्यतरस्य लिङ्गार्थमात्रप्रथमान्ततायाः स्वीकारेण निस्तारेऽपि अश्वेन श्वेन भूयते इत्यादौ तृतीयोपपत्तेर्व्विना तयोः कर्त्तृत्वस्वीकारं दुष्करत्वाच्च। इयांस्तत्र विशेषः वृत्तिविग्रहयोस्तुल्यविषयत्वमात्रं कल्प्यते तेन विग्रहे धात्वर्था-न्विताख्याताश्रये भृशोपमानादेरन्वयो वृत्तौ त्वाश्रयतया क्यङर्थ एवान्वय इति। एवं भवत्यस्त्यर्थकच्विप्रत्ययादावपि क्रिया-विशेष्यकबोधस्वीकारं विना न गत्यन्तरमेवञ्च प्रथमान्तमुख्य-विशेष्यकबोधाङ्गीकर्त्तॄणां न किञ्चिदनुगुणं सूत्रादिकं दृश्यते येन तथाकल्पनं क्रियेतेति जितं क्रियाप्राधान्यबोधवादि-भिरिति दिक्।

रोमन्थशब्दाद्विहितक्यङो वर्त्तनमर्थः वर्त्तनञ्चासकृदेक-जातीयकरणं रोमन्थस्य निगीर्णस्योदरादाकृष्य चर्व्वणं तस्य च कर्म्मतया वर्त्तनेऽन्वयः। तपसो विहितक्यङस्तु चरणमर्थः अन्वयस्तूक्तदिशा "कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति सूत्रे कर्म्मण इत्यस्य प्रतिपादकत्वरूपसम्बन्धार्थकषष्ठ्यन्तत्वात् कर्म्मप्रतिपादकार्थकतया कर्म्मप्रतिपादकाभ्यां रोमन्थतपोभ्या-मित्यर्थलाभात्। एतत्कर्म्मपदस्यैवाग्रिमसूत्रजातेऽनुवर्त्तनात् सर्व्वत्रैव कर्म्मतया नामार्थस्य तत्तत्प्रत्ययार्थेऽन्वय इत्यवधेयम् केवलं प्रकृतिभेदादुद्वमनाद्यर्थकत्वं प्रत्ययानामिति विशेषः।

तत्र वाष्पोष्मभ्यामुद्वमनं, शब्दवैरादिभ्यः, करणं सुखादिभ्यो वेदनमनुभवरूपं क्यङर्थः तत्र च सुखादेः सामानाधिकरण्ये-नाप्यन्वय इति विशेषः "सुखादिभ्यः कर्त्तृवेदने" इति निर्द्देशात् तेन परकीयसुखानुभवे न तथाप्रयोगः। नमसः पूजायां, वरिवसः परिपर्य्यायां, चित्रङ आश्चर्य्ये, इति वार्त्तिकोक्ताः नमआदिप्रकृतिकक्यङोऽर्थाः, "पुच्छादुदसने" "भाण्डात् समाचयने" चीवरादर्ज्जने परिधाने "च" इति वार्त्तिकोक्ताः पुच्छादिप्रकृतिकणिङोऽर्था इति बोध्यम्। "मुण्डमिश्रश्लक्ष्णलवण" इत्यादिना विहितणिचः करणाद्यर्थाः। तत्र मुण्डादिचतुर्भ्यः करणमर्थः "व्रतात् भोजनतन्निवृत्तौ, वस्त्रात् समाच्छादनं, हल्यादिभ्यो ग्रहणं, तूस्तादिघातः। तूस्तं जटीभूतकेशः" इति प्राञ्चः। अत्रेदं बोध्यं मुण्डादेर्णिजर्थक्रियायां कर्म्मतयान्वयेन तदन्तस्य गृहीतकर्म्मकतयाकर्म्मकत्वेऽपि मुण्डयति माणवकमिति भाष्यकृदुदाहरणदर्शनात् सकर्म्मकत्वमङ्गीक्रियते तथा हि मुण्डं करोति माणवकमिति विग्रहे कृधातोः पूर्व्वरूपासत्त्वोत्पत्ति-रूपफलद्वयजनकव्यापारबोधकतया फलद्वयेऽन्वितयोर्मुण्ड-माणवकयोः कर्म्मत्वमिति सिद्धान्तः। अत एव तत्रोभयो-रपि विकार्य्यकर्म्मत्वं विशिष्टपूर्व्वरूपासत्त्वोत्पत्तिरूपफलान्य-तरवत्त्वस्यैव विकार्य्यत्वादेवञ्च मुण्डयति माणवकमिति वृत्तावपि णिचः करणार्थकत्वेन कर्म्मद्वयसाकाङ्क्षत्वात् उत्-पाद्यकर्म्मणो धात्वर्थेनोपगृहीतत्वेऽपि इतरस्याग्रहणात् तत्-साकाङ्क्षत्वात्तेः सकर्म्मकत्वमित्यवधेयमेव देदं प्रमाणीकरोती-

त्यादावपि सकर्म्मकत्वमनुसन्धेयम्। एतेन प्रकृतिविकृतिभाव-
स्थले प्रकृतेर्यथाकथञ्चिल्लक्षणया विकृतिकर्म्मण्यभेदान्वयकल्पन
परास्तं प्रकृतिकर्म्मणः विकृतिकर्म्मणि समानाधिकरणविशेषणत्व-
कल्पने तत्सापेक्षस्य विकृतिकर्म्मणः णिजादिप्रत्ययार्थो-
न्वयासम्भवेनासामर्थ्यात् महान्तं पुत्त्रीयतीत्यादिवत् काष्ठं
भस्मीकरोति मुण्डयति माणवकमित्यादि वृत्त्यनुत्पत्त्यापत्ते-
रिति दिक्।

"धातोरेकाचोहलादेः क्रियासमभिव्याहारे यङिति
विहितयङः क्रियापौनःपुन्यं तदतिशयश्चार्थः।" पौनःपुन्यं
नामासकृदेकजातीयकरणम्। अतिशयश्च व्यापारगतः फलगतश्च
तत्र व्यापारगतः शीघ्रत्वादिरूपधर्म्मविशेषः फलगतः पुनः
दृढ़त्वादिरूपधर्म्मविशेष इति बोध्यम्। यङर्थस्य सर्व्वस्यैव
धात्वर्थे विशेषणतयैवान्वयो योग्यत्वात् "प्रधानप्रत्ययार्थवचन-
मर्थस्यान्यप्रमाणत्वात्" इति नेत्यनुवृत्तिमता सूत्रेण प्रत्ययार्थ-
प्राधान्यनियमनिरसनात्। गत्यर्थधातुप्रकृतिकस्य तु कौटिल्य-
मर्थः कौटिल्यञ्च कुटिलरेखावच्छिन्नप्रदेशवृत्तित्वम् लुपादि-
प्रकृतिकस्य पुनर्विषयतयान्वयिनी निन्दार्थः। बोधस्तु यथायथं
पौनःपुन्यविशिष्टा क्रिया अतिशयादिविशिष्टा वेत्येवंरूपः।

चुरादिभ्यो विहितणिचः प्रकृत्यर्थस्वरूपमर्थः स्वार्थिक-
प्रत्ययार्थवदन्वयादिः।

"हेतुमति चेति" विहितणिचः प्रयोजकव्यापारः प्रेरणादि-
रूपोऽर्थस्तत्र च प्रकृत्यर्थस्य प्रयोज्यतासम्बन्धेनान्वयः स्तने

हेतुमत्पदस्य हेतुवृत्तिधर्मपरत्वात् स्वनिष्ठाधारतानिरूपिता-धेयतासम्बन्धेन हेतुरस्यास्तीति व्युत्पत्तेः हेतुशब्दः पुनः "तत्प्रयोजको हेतुश्चेति" पारिभाषिकस्वतन्त्रकर्त्तृप्रयोजकपर एव, न तु सामान्यहेतुपरः "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्य-सम्प्रत्ययः" इत्युक्तेः। एवञ्च प्रयोजकवृत्तिरसाधारणधर्मश्च प्रयोज्यप्रवृत्त्यनुकूलव्यापार एवेति स एव णिजर्थः हेतुश्च द्विविधश्चेतनोऽचेतनश्च तत्राचेतनस्यानुग्राहकतयैव प्रयोजकत्वं चेतनस्य पुनरशेषतः प्रयोजकत्वम्। प्रयोजकव्यापारश्च प्रेरणा सा च नानाविधा निकृष्टस्य भृत्यादेः प्रेरणा प्रैषाज्ञादिरूपा, आराध्यस्य प्रेरणाध्येषणप्रार्थनादिरूपा, अनु-मतिमात्रेण प्रेरणाऽनुमतिरूपा, अनुग्रहेण प्रेरणानुग्रहादि-रूपेत्येवं विषयभेदात्। तत्र भृत्यं गमयतीत्यादौ प्रेषणा, आचार्य्यं गां ग्राहयतीत्यादौ प्रार्थना, राजा प्रजया याजयती-त्यादौ अनुमतिः, वैद्यो ज्वरितमौषधं भोजयतीत्यादौ उपदेश-मात्रेण, अत्र चानुग्रहश्चेतनधर्म्मः भिक्षा दरिद्रं वासयतीत्यादौ, तु अनुग्रहोऽचेतनधर्म्म इति विवेकः। एवञ्च चतुर्णामपि प्रवृत्त्यनुकूलव्यापारत्वेनानुगमात्तद्रूपेणैव शक्तिरिति बोध्यम्। इदन्तु बोध्यं लोटोऽपि प्रैषाद्यर्थकतया त्वं पचेत्यादितोऽपि तथा बोधेन तत्प्रयोगकर्त्तुः पाचकत्वापत्तिवारणाय लोटो-व्यापारानाविष्टप्रयोज्यप्रेरणार्थः णिचस्तु तदाविष्टप्रयोज्य-प्रेरणार्थ इति विशेषः कल्प्यते। उक्तञ्च हरिणा।

इव्यमात्रस्य तु प्रैषे प्रच्छ्यादेर्लोड् विधीयते।

सक्रियस्य प्रयोगस्तु यदा स विषयो णिच इति।

अस्यायमर्थः। (द्रव्यमात्रस्य) व्यापारानाविष्टस्य प्रवृत्त्यनुपहितस्येति यावत् प्रयोज्यस्येति शेषः (प्रैषे) प्रेरणार्थे (लोट् विधीयते) तद्बोधनाय लोट् प्रयुज्यत इत्यर्थः। (सक्रियस्य) व्यापाराविष्टस्य प्रवृत्त्युपहितस्येति यावत् (प्रयोगः) प्रेरणा (यदा स णिचो विषयः) णिच्प्रयोगस्थलमुदाहरणमिति यावत्। किञ्च प्रयोक्तृधर्म्मः प्रयुक्तिः सा च लोट्प्रयोगस्थले वक्तृकर्त्तृकैव णिच्प्रयोगस्थले तु अनियतकर्त्तृका, तथा च त्वं पचेत्यादौ वक्तैव परं पाकप्रयोजकः पाचयतीत्यादौ तु वक्तृभिन्नोऽपीति विशेषः। बोधस्तु मैत्रश्चैत्रं ग्रामं गमयतीत्यादौ मैत्राभिन्नैककर्त्तृकचैत्रकर्म्मकग्रामवृत्तिसंयोगानुकूलव्यापारानुकूलवर्त्तमानोव्यापार इत्येवंरूपः।

"तत् करोति तदाचष्टे" इत्यनेन विहितणिचः करणाख्यानञ्चार्थः यथायथमूह्यः तत्र च प्रकृत्यर्थस्य कर्म्मतयान्वयेऽपि करणार्थस्यापरकर्म्मसाकाङ्क्षत्वात् सकर्म्मकत्वम्, आख्यानार्थकणिजन्तस्य त्वकर्म्मकत्वमिति विशेषः। अत्राप्ययं विशेषः। आख्यानार्थकणिचः कृदन्तप्रकृतिकत्वे णिचि परे कृतो लुकि धातोः पूर्व्वरूपापत्तिस्तन्निबन्धनं पूर्व्ववत्कारकादिसंज्ञा तत्कार्य्यञ्चेष्यते। "आख्यानात् कृतस्तदाचष्टे कृतो लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमिति" वार्त्तिकोक्तेः। तेन कंसवधमाचष्टे इति विग्रहे कंसं घातयतीति प्रयोगस्तत्र कंसवधशब्दस्य कृदन्तत्वेन तदुत्तरविहिताख्यानार्थणिचि परे

कृतो लुकि कृदन्तत्वनिमित्तसंज्ञायानिवृत्तौ समासनिवृत्तिः सुबन्तकंसपदेन च धातुमात्रस्य समासविधायकसूत्राभावान्न समासान्तरं तथा कृत्प्रत्ययनिवृत्त्या च कृद्योगनिमित्तकषष्ठ्या अपि निवृत्तिः कल्प्यते एवञ्च कंसपदे विभक्तिविशेषाकाङ्क्षायां प्रकृतिवच्च कारकमित्युक्तेः कृत्प्रकृतेर्हननादेरर्थे कर्मत्वेन कंसादेरन्वयात् कर्मसंज्ञा तन्निमित्तकद्वितीयादिकार्य्यञ्चेति बोध्यम्। एवञ्च राजगमनमाचष्टे इत्यादावुक्तरीत्या राजादेः कृत्प्रकृतिगम्यार्थे कर्तृतयान्वयात् कर्तृसंज्ञया तन्निमित्तकतृतीयाप्राप्तावपि गतिबुद्धी इत्यादिसूत्रेण गत्यर्थधातोः कर्तुर्णिजन्ते कर्मसंज्ञाविधानात् द्वितीया तत्र सूत्रे आख्यानादिसाधारणसकलणिजन्तग्रहणात्। एवञ्च राजहरणमाचष्टे इत्यादौ राज्ञा राजानं वा हारयतीति प्रयोगः। एवम् कृदन्तप्रकृतिकाख्यानणिचोऽपि सनन्तवत् स्वप्रकृतिकृत्प्रकृतेः सकर्मकत्वाकर्म्मकत्वाभ्यां सकर्मत्वाकर्म्मकत्वे स्वीक्रियेते स्वीक्रियते च सनन्तवत् विशेष्यविशेषणभाववैपरीत्यं तदर्थयोः। तेन कंसो घात्यते राजा गम्यत इत्यादिप्रयोगः साधुः। बोधस्तु कर्तृलकारे चैत्राभिन्नैकाश्रयकं वर्त्तमानं कंसकर्मकहननकर्मकाख्यानं कर्मणि तु कंसाभिन्नैकाश्रयकर्मकं चैत्राश्रयकवर्त्तमानाख्यानकर्महननमित्येवंविधः।

"कण्ड्वादिभ्यो यक्" इति विहितस्य यकः क्रिया स्वरूपं चार्थः कण्ड्वादीनां नामरूपत्वे क्रियार्थः धातुरूपत्वे स्वरूपमर्थः

तत्रान्वयश्च यथायथं कर्म्मतयाऽभेदेन वा बोध्यः। सिद्धान्ततत्त्वाकरे कण्ड्वादीनामुभयरूपत्वं यथोक्तमभियुक्तैः

धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।

आह चायमिमं दीर्घं मन्ये धातुर्विभाषितइति।

धातोरेव किति परे गुणनिषेधात् यगिति च कित्करणात् प्रकरणाच्च तेषां धातुत्वं गम्यते, अजन्तस्य धातोर्यकारे परे दीर्घसम्भवेऽपि दीर्घत्वेन कण्ड्वादीनां पठनात् नामत्वमित्युभयेषां ग्रहणमिति सिद्धान्तः।

सत्यादिप्रकृतिकणिजर्थास्तु विस्तरभयान्न दर्शिताः "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इत्यनेन विहितणिचस्तत्तत् क्रियार्थः अन्वयस्तु कर्म्मतयैव। सनन्तादीनां सिद्धान्ते वृत्तिशब्दतया समुदायशक्तिस्वीकारेऽपि लाघवार्थमवयवशक्तिप्रदर्शनमिति स्मर्त्तव्यम्।

एवं धात्वर्थे निरूपिते इदानीं तत्प्रकृतिकाः प्रत्यया निरूप्यन्ते। अत्र धातुप्रकृतिकत्वं नाम तदुत्तरविधीयमानत्वे सति अर्थबोधकत्वम्। ते च त्रिविधाः सनादयो धात्वंशा लकाराः कृतश्चेति। स्वान्तत्वेन धातुसंज्ञानिमित्ता धात्वंशास्तेऽपि द्विविधा नामप्रकृतिकाः क्यजादयः सनादयः पुनर्धातुप्रकृतिका इति भेदात् तेषामर्थान्वयाद्यनुपदमेवाभ्यधायि। लकाराः पुनरत्र निरूप्यन्ते कृतस्तु पश्चात् वक्ष्यन्ते। संख्यावाचकत्वे सति धातुप्रकृतिकत्वं लकारलक्षणं कृतां तथात्ववारणाय सत्यन्तं सुपां तथात्ववारणाय च विशेष्यम्।

आदेशतिबादीनामेव च संख्यावाचकत्वमादाय लकार-सामान्ये संख्यावाचकत्वम्

सुपां कर्म्मादयोऽप्यर्थाः संख्या चैव तथा तिङामिति

भाष्योक्तेरेवञ्च लकाराणां संख्यायामेव शक्तिर्लाघवात्। कर्त्तृकर्म्मभाववाचकत्वन्तु यथायथं सर्व्वलकारीयपरस्मैपदादेः "संख्या चैवेति समुच्चायकचकारेण कर्त्रादीनां भाष्ये तदर्थत्वप्रतिपादनात्। तथा च 'कर्म्मकर्त्तृविहितभावसाधारण-विधिविहितं सकर्म्मकधातुसमभिव्याहृतं सर्व्वलकाराणामात्मनेपदं कर्म्मबोधकमकर्म्मकधातुसहकृतं तदेव भावबोधकं तदुभयभिन्नमात्मनेपदं परस्मैपदञ्च कर्त्तृबोधकम् "लःकर्म्मणि च भावे चाकर्म्मकेभ्यः" इति तङधिकारे "भावकर्म्मणोरिति" "स्वरितञितः" इत्यादि "शेषात् कर्त्तरि परस्मैपद" मित्यादि सूत्रजातानामेकवाक्यतया तथा व्यवस्थायाः शास्त्रसिद्धेः "लःकर्म्मणि च" इत्यादिसूत्रे चकारेण "कर्त्तरि कृत्" इत्यतः कर्त्तरीत्यस्यानुवृत्तेश्च। सकर्म्मकधातुप्रकृतिलकाराणां कर्त्तृकर्म्मवाचकता। "भावे च" इति चकारेण कर्त्तुरेवानुवृत्तेश्चाकर्म्मकधातुप्रकृतिकानां भावकर्त्तर्थकता" इति सामान्यतोऽवगमेऽपि अन्यान्यसूत्रजातैकवाक्यत्वात्तथाकल्पनाच्च। अत्रेदं बोध्यम् स्वरितञिज्जातत्तरतङः कर्त्तृ-गामिन्येव सति क्रियाफले कर्त्तृवाचकत्वं नान्यथा तत्र फलञ्च न 'धातूपस्थाप्यं' जानात्यादीनां ज्ञानरूप-फलस्य समवायेन कर्तृनिष्ठतया सर्व्वदैव जानीते इत्येव-

प्रयोगापत्तेः जानातीत्यादेरपलापापत्तेश्च नेष्यते तु तथा शास्त्रकारैः। नापि क्रियाजन्यवेतनदक्षिणादिरूपलाभादिगौणं फलमिह विवक्षितं तथा सति सूदादेस्तादृशफलवत्त्वेन सूदः पचते ऋत्विजो यजन्ते इत्यादिप्रयोगापत्तेः किन्तु फलतीति व्युत्पत्त्या प्रयोजनापरनाम क्रियाजन्यं तृप्तिस्वर्गादिरूपमेव मुख्यं फलं ग्राह्यं यथोक्तं हरिणा

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।

तत् प्रधानं फलं तासां न लाभादि प्रयोजनमिति।

(प्रसिद्ध्यर्थम्) निष्पत्त्यर्थम् (पचादयः) पाकादयः (तासाम्) पचादीनाम् (प्रधानं फलम्) तदित्यर्थः फलस्य प्राधान्यञ्चेतरापेक्षया बोध्यं तेन इतरेच्छाविषयत्वस्य तस्य सुखादिष्वेव सत्त्वेऽपि क्वचित्साक्षात्सुखादिरूपप्रयोजनालाभे तत्साधनरूपेतरफलस्यापि ग्रहणमिति द्रष्टव्यम्। तेन "अपादद इत्यादि" सूत्रविहिततङः सुखादिरूपमुख्यप्रयोजनाभावेऽपि कर्तृवाचकत्वम्।

अत्र "कर्त्ता धातूपात्तव्यापाराश्रयः कर्म तु तदुपात्तफलाश्रयस्तत्र फलव्यापारयोर्धातुनैव लाभादाश्रयमात्रं लकारार्थ" इति कौस्तुभानुसारिणः। "कर्तृकर्मशक्तिमानेव लकारार्थः" इति तु मञ्जूषाकृतः। "भावः पुनर्धात्वर्थः असत्वभूत एव न तु घञादिवत् सिद्धभूतः

असत्वीभूतो भावश्च तिङ्पदैरभिधीयते

तिङ्पदैरित्यत्रातद्गुणसंविज्ञानाश्रयणमते तिङां तथा

भावावगमहेतुत्वावगमात्। एवञ्च धातुनैव तदुपस्थितावपि एकोद्वावित्यादौ सुबर्थद्वित्वादेर्नामार्थांशेऽनुवादवत् धात्वर्थभाव लकारार्थयोरनुवाद्यानुवादकता तथा च उभाभ्यां मिलित्वा विशिष्टैकार्थबोधस्तेन "सम्भेदे नान्यतरवैयर्थ्य" मिति न्याया-न्नान्यतरवैयर्थ्यम्। अनुवाद्यतत्तद्धात्वर्थस्वरूपे भावलकाराणां लक्षणा वा तयोश्चाभेदेनान्वय इति मतान्तरम्। इदन्तु बोध्यम्। संख्याया द्रव्यधर्म्मतया धातूपात्तायाः क्रियायाश्चामूर्त्तत्वेन तत्र संख्यान्वयस्य साक्षादसम्भवेन क्रियान्वयिन्याख्यातार्था-श्रये एव तदन्वयो युक्तः एकपदोपात्तत्वात् तत्पारतन्त्र्येणैव संख्यायाः क्रियान्वयाभ्युपगमादेकवचनादिव्यवस्था। तथा हि कर्तृकर्म्मलकारस्थले लकारेणाश्रयोपस्थितेस्तत्र च संख्याविशे-षान्वयसम्भावादेकद्विवचनादि, भावे तु तृतीययैवाश्रयोपस्थिते-रेकपदोपात्तत्वाभावेन तत्र लकारार्थसंख्याया अन्वयासम्भवा-दुत्सर्गतः प्रथमोपस्थितत्वाच्चैकवचनमेव उक्तञ्च हरिणा।

एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया।

भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रय इति।

उत्सर्गतः (एकत्वे) सत्यपि साधनाश्रयसंख्यया (आख्याते क्रिया भिद्यते) इत्यर्थः। अत्राख्यात इत्युपादानात् आख्यातार्थाश्रयसंख्ययैव क्रियाभेदो न तु तृतीयाद्युपस्थाप्याश्रय-संख्ययापि तेन चैत्राभ्यां सुप्यते इत्यादौ न द्विवचनादि न च नामार्थलिङ्गेन क्रियाभेदो लिङ्गस्येतरपदोपात्तत्वात्। एवञ्च लिङ्गसंख्यानन्वयित्वरूपामूर्त्तत्वलक्षणे संख्याविशेषस्य

साच्चादनन्वयित्वविवच्चणाल्लिङ्गमात्रस्य वा तथात्वविवच्चणान्न दोष इत्यनुसन्धेयम् । उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते इत्यादिभाष्योदाहरणे च उपमानोष्ट्रासनादिबाहुल्येनोपमेया-सनादेर्बाहुल्यस्य विवच्चणाद्भावेऽपि बहुवचनादीत्याकरे स्पष्टम् । उष्ट्रासिकापदञ्च द्वितीयाबहुवचनान्तं क्रियाविशेषणतया द्वितीयोत्पत्तेर्बाहुल्येनैवोपमानविवच्चणात् बहुवचनम् "स्त्रियां क्तिन्, ण्वुल्तुमुनौ", इत्यधिकारे ण्वुलो धात्वर्थनिर्देशे विधानान्न क्लीबत्वमिति च बोध्यम् । हरिणाऽपि

कालभिन्नाश्च ये भिन्ना ये चाप्युष्ट्रासिकादिषु ।

इत्यनेन पचति पपाचेत्यादौ कालकृतपाकभेदवत् उष्ट्रा-सिकादिषु उपमानभेदाद्भेद इति प्रतिपादितम् । तत्रा-प्ययं विशेषः साधनाश्रयसंख्यया क्रियाभेदोपगमेऽपि शब्द-शक्तिस्वाभाव्यादेव क्वचिद्भेदः क्वचिन्नेति । तथा हि ब्राह्मणा भोज्यन्तामित्यादौ ब्राह्मणरूपकर्म्मभेदात् भोजनक्रियाभेदः ब्राह्मणा दृश्यन्तामित्यादौ पुनरेकैव क्रिया समूहालम्बना-त्मिका सर्व्वकर्म्मान्वयिनीति । हरिणाऽपि

सङ्ख्यैकशेषद्वन्द्वेषु केचित् सामर्थ्यलच्चणम् ।

प्रत्याश्रयमवस्थानं क्रियाणां प्रतिजानते इति

क्रियाविशेषाणामाश्रयभेदादवस्थानं सामान्यतोऽभिधाय

भोजनं फलरूपाभ्यामेकैकस्मिन् व्यवस्थितम् ।

अन्यथा हि व्यवस्थाने न तदर्थाय कल्पते ।

अनादनादिरूपाच्च सर्व्वं तृप्तिफलां भुजिम् ।

सन्दिह्यते सन्देहाभावादेव भेदस्य सुदूरपराहतत्वात् स्वरूपात् न भिद्यते इति फलितार्थस्तस्मात् स्वरूपतो भेदाभावादेव (पररूपेण) कालक्रियास्वरूपेण (पर्व्वतादिस्थितिः) भिद्यत इत्यर्थः ।



लिटोऽनद्यतनभूतत्वं पारोक्ष्यञ्चार्थः तच्च क्रियान्वयि । अनद्यतनभूताधिकारे "परोक्षे लिट्" इति सूत्रात् अनद्यतनत्वञ्च प्रयोगाधिकरणदिनावृत्तित्वं भूतत्वञ्च वर्त्तमानध्वंसप्रतियोगित्वं, पारोक्ष्यन्तु साक्षात्करोमीत्यादिज्ञानाविषयत्वं यद्यपि पपाचेत्यादौ शाब्दबोधे नैतस्य भानमानुभविकं तथापि तद्योग्यक्रियादावेव लिटः सामर्थ्यं तेन साक्षात्कृतव्यापारे न लिट्प्रयोगः । उत्तमपुरुषे लिट्प्रयोगस्तु चित्तव्यासङ्गादिनेत्याकरे स्पष्टम् ।

लुटोऽनद्यतनभावित्वमर्थः "भविष्यदधिकारे अनद्यतने लुट्" इति सूत्रात् भावित्वञ्च वर्त्तमानप्रागभावप्रतियोगित्वं तेन मध्याह्नादौ भाविनि भवितेति न प्रातः प्रयोगः ।

ऌटो भविष्यत्त्वमात्रमर्थः "ऌट् शेषे च" इति सूत्रात् तेन भविष्यतीत्यादौ भविष्यत्सामान्यार्थावगमः ।

लेटो विध्यादयोऽर्थाः "लिङर्थे लेट् इति" सूत्रात् जोषिषदित्यादिप्रयोगे हि विध्यर्थावगमः ।

लोटः प्रार्थनादयोऽर्थाः लिङर्थान् विध्यादीनभिधाय "लोट् च" इति सूत्रेण विध्याद्यर्थेष्वेव तस्य विधानात् तथा "आशिषि लिङ्लोटौ" "प्रार्थनातिसर्गप्राप्तकालेषु

कृत्याश्च” इति सूत्राभ्याम् आशीरादयोऽपि लोडर्था वेदितव्याः सुखं ते भवत्वित्यादौ च अप्राप्तप्राप्तीच्छारूपाशीर्व्वादो धात्वर्थे विषयतयान्वेतीति बोध्यम् ।

लङोऽनद्यतनभूतत्वमर्थः भूताधिकारे “अनद्यतने लङ्” इति सूत्रात् तेन प्रातर्भूतवस्तुनि मध्याह्नादावभवदित्यादिर्न-प्रयोगः ।

लिङो विध्यादयोऽर्थाः । “विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्न-प्रार्थनेषु लिङ्”इति सूत्रात् तत्र प्रवृत्त्यनुकूलव्यापारो-विधिः अनुकूलत्वञ्चात्र प्रवृत्तिजनकतावच्छेदककोटिप्रविष्ट-त्वेनैव ग्राह्यं तेनेष्टसाधनत्वमेव विधिरिति फलितम् । प्रवृत्तिं प्रतीष्टसाधनताज्ञानस्यैव हेतुत्वेन तत्कोटिप्रविष्ट-तया इष्टसाधनत्वस्यापि तद्धेतुत्वोपगमात् प्रवर्त्तकत्वम् । विधिवाक्यस्य प्रवर्त्तकत्वन्तु तद्बोधजनकत्वादिति विवेकः । कृतिसाध्यताज्ञानस्य प्रवर्त्तकतया कृतिसाध्य-ताया लिङर्थत्वापत्तावपि कृतिसाध्यतायाः प्रमाणान्तरगम्य-तया वैदिकलिङा बोधयितुमशक्यत्वात् न तदर्थत्वम् । द्विष्टा-साधनत्वज्ञानन्तु द्वेषाभावेनान्यथासिद्धतया न प्रवर्त्तकमिति द्विष्टासाधनत्वस्य न तथात्वम् । उक्तञ्च मण्डनमिश्रैः ।

पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः ।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनामिति ।

तेन “समुद्रं न तरेदि” इत्यादौ लक्षणयैव कृतिसाध्यत्वं “परदारान्न गच्छेदित्यादौ च लक्षणयैव द्विष्टासाधनत्वं

लिङोपस्थाप्यं नञा निषेध्यते इत्यवधेयम्। यजेतेत्यादौ च इष्टसाधनताश्रयो याग इति बोधः इष्टञ्चात्र तत्तत्कामादिपद-सहसमभिव्याहारे कामनाविषय एव ग्राह्यस्तदसमभिव्याहारे तु-विश्वजिन्न्यायेन स्वर्गादिफलं वेदे, लोके तु यथायथमिष्टं फलं ग्राह्यमिति बोध्यम्। निमन्त्रणमावश्यकक्रियासु प्रवर्त्तनम् आमन्त्रणं पुनः कामचारानुज्ञा सा चान्यत्र प्रवृत्तस्य तत्-प्रवृत्तिप्रतिबन्धेन स्वाभिलषितविषये प्रवर्त्तना। अधीष्टं सत्कारप्रयोज्यप्रवृत्त्यनुकूलो व्यापारः। अत्र च लिङः प्रवर्त्त-नात्वेनैव सर्व्वत्र शक्तिस्तेन तथैव बोधः न तु शाब्दबोधे निमन्त्रणत्वादिरूपेण भानं मानाभावादनुभवाभावाच्च सूत्रे तु तेषां पृथग्ग्रहणं प्रवर्त्तनाया एव विषयभेदेन तथा-व्यवहर्त्तव्यताया उपदेशार्थमिति बोध्यम्। यथोक्तं हरिणा।

अस्ति प्रवर्त्तनारूपमनुस्यूतं (रूपं) चतुर्ष्वपि।
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया।
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा।
विध्यादीनामुपादानं चतुर्णामादितः कृतमिति।

एवञ्च भुञ्जीत भवानित्यादौ इष्टसाधनं भवत्कर्त्तृकं भोजन-मित्यादिरीत्या निमन्त्रणामन्त्रणादौ बोधः। संप्रश्नः ज्ञाप-नेच्छा ज्ञानञ्च प्रयोक्तृनिष्ठं तस्याश्च विषयतया धात्वर्थेऽन्वयः किं भोस्तर्कमधीयीथा इत्यादौ त्वत्कर्त्तृकतर्काध्ययनं मज्ज्ञा-नानुकूलव्यापारेच्छाविषय इति बोधः किंशब्दस्तु जिज्ञासा-द्योतकः। प्रार्थनं स्वाभिलषितविषये प्रवर्त्तनं तच्च देहि

याहीत्याद्यभिलापादिरूपं विषयतया च तस्य धात्वर्थेऽन्वयः अभिलाषादेरपि अभिलष्यमानविषयत्वस्वीकारान्नायोग्यता। "हेतुहेतुमतोर्लिङिति" सूत्रविहितलिङो हेतुत्वं जन्यत्वञ्चार्थः तच्चोभयमपि क्रियान्वयि तेनोभयक्रियापदसमभिव्याहारे एव तत्प्रयोगः ज्ञानं चेद्भवेत् सुखं भवेदित्यादौ ज्ञानभवनं सुखभवनजनकं ज्ञानभवनजन्यं वा सुखभवनमित्याकारकबोधः। आशीर्लिङः पुनराशीरर्थः आशीश्चोक्ता तस्याश्च विषयतया धात्वर्थेऽन्वयः आशीश्च प्रयोक्तृनिष्ठा बोध्या। तेन सुखं ते भूयादित्यादौ भवत्सम्बन्धिसुखकर्त्तृकभवनं मदिच्छाविशेषविषयः।

भूताधिकारे "लुङिति" सूत्राच्च लुङो भूतसामान्यमर्थस्तेन प्रातर्भूते पूर्व्वदिनभूते च मध्याह्नादौ अभूदित्यादिप्रयोगः।

ऌङो भूतत्वं भविष्यत्त्वं जन्यजनकत्वञ्चार्थः "लिङ्-निमित्ते ऌङ्क्रियातिपत्तौ" इति सूत्रात् लिङ्- निमित्तं हेतुहेतुमद्भावः तच्च ऌङा द्योत्यायां धात्वर्थानिष्पत्तावेवान्वेति एवञ्च लिङ्वत् ऌङपि क्रियाद्वयप्रयोगे एव प्रयुज्यते अन्यथा तयोः हेतुतादिबोधनासम्भवात्। तथा च वह्निश्चेत् प्राज्वलिष्यदोदनमपक्ष्यदित्यादौ वह्न्याश्रयकप्रज्वलनानिष्पत्ति-प्रयोज्या ओदनकर्म्मकपाकानिष्पत्तिरिति बोधः। अत्र धातूनामेव तदनिष्पत्तौ लक्षणा ऌङस्तु तत्तात्पर्य्यग्राहकत्वं तेन न क्रियामुख्यविशेष्यकत्वहानिरित्यवधेयम्। लड़ादीनामेष्वर्थेषु शक्तिर्लक्षणा पुनस्तत्तदर्थेषु सूत्रवार्त्तिकाद्युक्ते-

स्विति बोध्यम्। तथा हि "लट् स्मे" इत्यादिना शब्दविशेष-योगेन लड़ादीनां भूतत्ववाचकता क्वचिच्च प्रकरणादिवशात् लडादीनां वर्त्तमानसामीप्यादिवाचकता यथा कदागतोऽसीति प्रश्ने अयमागच्छामीत्यादौ। क्वचिच्च आशंसा-विषयत्वेन लडादीनामपि वर्त्तमानभविष्यत्त्वादिवाचकत्वं यथा "मामुपायंस्त रामेत्यादौ भवत्कर्त्तृकभाविमदुपयमनं मदिच्छाविषय इत्येवं बोधः। एवं स्मरणविषये लृटोऽतीतत्वमर्थः। अश्रद्धामर्षविषये च लडादेः कालसामान्यवाचकत्वं बोध्यम्। तथा तात्पर्य्यवशात् लिङा सामर्थ्यहेतुकक्रिया-योग्यताध्यवसायोऽर्थो बोध्यते तस्यापि विषयतयैव क्रियाया-मन्वयः यथा समुद्रमपि तरेदित्यादौ समुद्रकर्म्मकतरणं सामर्थ्यवत्तया सम्भावनाविषय इत्येवं बोधः। "लोडर्थलक्षणे च" इत्यादिना विहितलटः प्रैषादिविषयलक्षणमर्थः लक्षणञ्च ज्ञापनं प्रेरणाविषयक्रियायान्तु ज्ञाप्यत्वं वाक्यार्थमर्य्यादया भासते यथा गुरुश्चेदायाति भवानधीयीतेत्यादौ भवत्कर्त्तृक-मिष्टसाधनाध्ययनं भाविगुर्व्वागमनज्ञाप्यमिति बोधः। एव-मिच्छार्थकधातूपपदेऽपि लिङो विषयत्वमर्थः इच्छामि त्वं गच्छेरित्यादौ त्वत्कर्त्तृकगमनं मदिच्छाविषयः इतिबोधः। कामप्रवेदन इति विहितलिङस्तु इच्छाविषयत्वेन वाक्यप्रति-पाद्यत्वमर्थस्तेन कामो मे त्वं हरिं नमेरित्यादौ हरिकर्म्मक-त्वत्कर्त्तृकनमनं मदिच्छाविषयत्वेन "कामो मे इति" वाक्य-प्रतिपाद्य इति बोधः। एवमन्येषामपि लकारविशेषार्था-

नामन्वयस्वरूपादिकञ्च तत्तत्सूत्रव्याख्यानादौ द्रष्टव्यम्।
विस्तरभयान्नेह प्रपञ्चितम्।

इदानीं कृतो निरूप्यन्ते। कृतो हि नामांशान्तत्वेन नाम-
संज्ञानिमित्तीभूता धातुप्रकृतिकाः प्रत्ययाः "कृत्तद्धितसमा-
साश्च" इति सूत्रेण कृदन्तानां नामसंज्ञाविधानात् "धातो"
"रित्यधिकारे विहितानां" कृदतिङिति सूत्रेण तिङ्भिन्नप्रत्य-
यानां कृत्त्वावगतेश्च। अत्र प्रत्ययपदञ्च प्रकृत्युत्तरविधीय-
मानपरं न तु अर्थबोधकपरं तेनोणाद्यन्तानां रूढ़त्व-
पक्षेऽपि न तेषां कृत्त्वहानिः कृदधिकार एव तेषां विधानेन
कृत्त्वाभ्युपगमात्। परन्तु उणादीनामवयवशक्त्याऽर्थबोधकत्वं
सर्व्वत्र सर्व्वैर्नाङ्गीकृतमित्येव विशेषः। तथा हि शकटाचार्य्येण
"नाम च धातुजमाह निरुक्ते" इत्युक्तेर्नाममात्रस्य धातु-
जन्यत्वादरेण कृदन्तानामिव उणाद्यन्तानामपि प्रकृतिप्रत्यय-
विभागेन व्युत्पत्तिपक्षोऽवलम्बितः पाणिनिनापि तत्साधु-
त्वाभ्यनुज्ञानार्थं स्वशास्त्रे "उणादयो बहुलम्" इति सूत्रेण
सामान्येनैषामधिकारात् वर्त्तमानार्थकतां प्रदर्श्य "भूतेऽपि
दृश्यन्ते" इत्यनेन क्वचिद्भूतभविष्यदर्थकता दर्शिता दर्शिता च
"ताभ्यामन्यत्रोणादय" इत्यनेनापादानसम्प्रदानातिरिक्त-
कारकसामान्यार्थकता तत्र यदि उणाद्यन्तेष्ववयवशक्तिर्नाङ्गी-
कृता स्यात् स्यादेव तदा कालकारकरूपतदर्थानामनन्वयः
धातूपात्तव्यापार एव तेषामन्वयाभ्युपगमात् अन्यथा तद्धिता-
न्तोपस्थाप्यक्रियायामिव नामोपस्थाप्यायां तस्यां तदन्वयासम्भ-

वात् तेषां तत्तदर्थकताकथनमनर्थकं स्यात्। अत एव च तद्-योगे कारकादिप्रयोगोदृश्यते यथा

राघवस्य ततः कार्य्यं कारुर्व्वानरपुङ्गवइत्यादि।

एवं उणादयोऽव्युत्पन्नानि प्रातिपदिकानीत्युक्तेस्तदन्तानां रूढ़त्वमपि तथा च तेषां रूढत्वंयौगिकत्वञ्च स्वीकार्य्यमर्थ-विशेषेण व्यवस्थासम्भवेनोभयसामञ्जस्यसम्भवात्। तथा च कारुप्रभृतयः कारकाद्यर्थे यौगिकाः, रूढाः पुनः शिल्पि-न्यर्थे इति व्यवस्था अत एव धरण्यादिकोषे तेषामुभयार्थ-कताङ्गीकृता "कारुः कारकशिल्पिनोः" इत्युक्तेः।

तुमुन्क्त्वादीनामपि नामत्वमिष्टमेव परन्तु "कृन्मेजन्त" इति सूत्रेण मान्तैजन्तकृदन्तानामव्ययसंज्ञाविधानादव्ययत्वं तथा सत्ववाचित्वाभावादपि तेषां तथात्वं लिङ्गकारकत्वायोगेन सत्त्ववाचित्वाभावाभ्युपगमात्। अत एव हिरुगाद्यर्थानामिव तदन्तार्थस्य धात्वर्थे साक्षादन्वयेऽपि न क्षतिः अव्ययाति-रिक्तनामार्थस्यैव धात्वर्थे साक्षादन्वयानभ्युपगमात्। एवञ्च तुमुनन्तादीनां कृदन्तत्वात् नामसंज्ञया सुबुत्पत्तौ "अव्यया-दाप्सुपः" इत्यनेन सुपो लुगिति बोध्यम्।

एवं कृल्लक्षणे स्थितेऽधुना तदर्था निरूप्यन्ते। तत्र "कर्त्तरि कृत्" इत्युक्तेः असति विशेषविधानेऽनिर्द्दिष्टार्थानां सर्व्वेषां कृतां कर्त्तैवार्थः तत्र च धात्वर्थस्य विशेषणतयै-वान्वयः "सत्वप्रधानानि नामानि" इत्युक्तेरसति बाधके प्रत्य-यार्थप्रधानत्वाभ्युपगमाच्च। तत्र कर्त्ता आश्रयः कर्त्तृशक्तिमान्

वा बोध्यस्तदेकदेशे च आश्रयतायां कर्त्तृशक्तौ वा निरूपितत्व-संसर्गेण धात्वर्थस्यान्वय इत्युपेयम्। एवं कर्म्मार्थकक्टदन्तेऽपि एकदेशान्वयः। सति तु विशेषविधाने कृतां तत्तदर्थी एवाव-सेया यथा "तयोरेव कृत्याथखलर्थाः" इत्यनेन कृत्यादीनां कर्म्म-भावार्थकता। "भावे इत्यधिकारविहितानां घञादीनां भावार्थ" कतेत्येवंजातीयकविधिविशेषबलादर्थविशेषावधारणम्। अत्रेदं बोध्यं प्रत्ययार्थानामन्येषां प्राधान्येऽपि कालसंख्येष्टसाधन-त्वादीनां तदर्थानां सर्व्वैर्वादिभिर्विशेषणतयान्वयाभ्युपगमेन कृदर्थकालेष्टसाधनत्वादीनां धात्वर्थे विशेषणत्वमेवोपेयते "क्रियाभेदाय कालस्तु" इत्युक्तेः। ततश्च कालकारकाद्यन्वयानु-रोधेनात्रापि धातुना साध्यरूपैव क्रियोपस्थाप्यते इत्युक्तम् प्राक् स्मर्त्तव्यम्। एवञ्च धातुना साध्यरूपक्रियोपस्थितावपि तदुत्तरविहितभावार्थकघञादिभिः सिद्धरूपैव क्रियोपस्थाप्यते न तु भावलकारवत् प्रकृत्यर्थानुवादेन साध्यरूपक्रियोप-स्थितिः "कृदभिहितो भावो द्रव्यवत्प्रकाशते" इति भाष्योक्तेः

सिद्धभावश्च यस्तस्याः स घञादिनिबन्धन इति।

हर्य्युक्तेश्च भावतव्यादिभिस्तु प्रकृत्यर्थानुवादेन साध्यक्रियैवोपस्था-प्यते तेनाख्यात इव तत्रापि "क्रियायाः प्राधान्येनैव बोधः" इति कैयटोक्तं प्रागुक्तमनुसन्धेयम्। "अव्ययकृतो भाव" इत्या-दावपि साध्यरूपक्रियानुवादेन प्रकृत्यर्थबोधकत्वं तुमुनादीनां बोध्यम्

"अव्यय कृतः" इत्युक्तेः प्रकृत्यर्थे तुमादयः।

समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिरिति हर्य्युक्तेः। न तु सिद्धरूपक्रियावोधकत्वं पाकादीनामिव तदन्तानां लिङ्गकारकत्वायोगेन सत्वभूतत्वासिद्धेः अत एव च तेषाम् "सर्व्वस्य द्वे इत्यधिकारे "नित्यवीप्सयोः" इत्यनेन द्वित्वं व्यवस्थापितम् आभीक्ष्ण्यरूपनित्यत्वस्य साध्यक्रियाया एवौचित्येन घञन्तानां तदर्थवोधकत्वाभावात् पाकः पाक इत्यादिन प्रयोगः प्रयोगश्च भोक्तुं भोक्तुं भुक्त्वा भुक्त्वेत्यादि। एतदभिसन्धायैव च हेलाराजीये "यथानेकमपि क्त्वान्तमिति" पठित्वा साध्यक्रिययोर्विशेष्यविशेषणभावसम्भवे क्त्वान्तार्थस्य तिङन्तार्थसाध्यक्रियायां विशेषणत्वं दृष्टान्तितमित्यवधेयम् अन्यथा दृष्टान्तदार्ष्टान्तिकयोर्व्वैरूप्यापत्तेरिति दिक्।

एवं कृत्सामान्यार्थे प्रदर्शितेऽधुना केषाञ्चित् कृद्विशेषाणामर्था निरूप्यन्ते। तत्र कृत्याः इत्यधिकृत्य ण्वुल्तृचावित्यतः प्राक् विहितानां तव्यादीनां भावः, कर्म्म, प्रेषणादयो, योग्यतादयश्चार्थाः "तयोरेव कृत्येभि" आद्युक्तेः "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च" इति सूत्रात् "अर्हे कृत्यतृचश्च" इति सूत्रात् "शकि लिङ् च" इति सूत्राच्च। तत्र च कर्म्मरूपार्थे धात्वर्थो विशेष्यः प्रैषादयः पुनर्धात्वर्थे एव विशेषणानीति विशेषः। तत्र प्रैषः प्रेरणा प्रवृत्त्यनुकूलव्यापारः स च इष्टसाधनत्वमेवेत्युक्तं प्राक्। अतिसर्गः कामचारानुज्ञा सापि व्याख्याता प्राप्तकालः विलम्बाक्षमत्वं तेनापि नियोगो द्योत्यते इति तदुत्तरं क्रियायां नियोगप्रतीतिर्मानसीत्यवधेयम्। अर्हत्वं योग्यत्वं तदपि

क्रियान्वयि। (शक्ति) शक्तावित्यर्थः तेन तस्या अपि प्रयोज्यतया धात्वर्थेऽन्वयात् तद्विशेषणत्वम्। बोधस्तु गन्तव्यो ग्राम इत्यादौ प्रवर्त्तनाविषयगमनकर्म्माभिन्नो ग्राम इति, शयितव्यमित्यादौ इष्टसाधनशयनानुकूला भावनेति बोधः। स्तुत्योदेव इत्यादौ च योग्यस्तुतिकर्म्माभिन्नो देव इति बोधः, वोढ़व्यो रथ इत्यादौ शक्तिप्रयोज्यवहनकर्म्माभिन्नो रथ इत्यादिरीत्या बोधः। अपरे तु अर्हशक्यादीनां कर्म्मादावभेदेनान्वयमिच्छन्ति तेषां मते पुनर्भावे अर्हार्थकक्तत्यानुत्पत्ताविष्टापत्तिरेव शरणमित्याकरे स्पष्टम्। एते पुनः सकर्म्मकाकर्म्मकधातुभेदेन कर्म्मभावार्थका इत्यवधेयमेवमन्येऽपि कृतो भावकर्त्रार्थकाः व्यवस्थापनीया इति दिक्।

"ण्वुल्तृचौ" इत्यधिकारविहितण्वुलादीनां कर्त्तैवार्थः तदेकदेशे च धात्वर्थस्यान्वयः। तेन पचतीति पाचकः पक्तेत्यादौ पाककर्त्तेत्येवंबोधः पचतीति विग्रहे भावनाप्राधान्येऽपि नामार्थयोरभेदान्वयोपपत्तये कृदन्ते तद्वैपरीत्यस्य अगत्या स्वीकारेण वृत्तिविग्रहयोर्भिन्नाकारकत्वकल्पनात्। उक्तञ्च हरिणा

आख्यातं तद्धितकृतोर्यत् किञ्चिदुपदर्शकम्।
गुणप्रधानभावे च तत्र दृष्टो विपर्य्यय इति।

"कर्म्मण्यण्" इत्यादिना कर्म्मोपपदकधातूत्तरं विहितादीनां कर्त्तैवार्थस्तत्र च "उपपदमतिङ्" इति वचनात् निर्विभक्तिककारपदेन कृद्योगविहितषष्ठ्यन्तपदस्य समास इत्यवधेयम् पूर्ब्बपदे द्वितीयोत्पत्तेः प्राक् धातुमात्रेण समासे कर्म्माद्युपपदत्वा-

भावात् प्रत्ययानुत्पत्तेः चर्म्मकारइत्यादौ चर्म्मणोऽपदत्वेन नलोपानुपपत्तेश्च उपपदसमासस्थले उत्तरपदे एव सुबुत्पत्तेः प्रागेव समासस्वीकारात् "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः" इति वार्त्तिककृता तथैवोक्तेः अन्यथा कुम्भकार इतिवत् कुम्भस्य कार इत्यपि प्रयोगापत्तेः अत एव चर्म्मक्रीतीत्यादौ सर्व्वैरेव निबन्धृभिः क्रीतादिनाम-मात्रेणैव सुबन्तचर्म्मपदस्य समासस्य स्वीकारेण ईबादिकमुपपादितम्। हरिणाऽपि षड्विधसमासगणनायां सुबन्तस्य नाममात्रेण समासोऽप्येकविध इत्युक्तम्। यथा

सुपां सुपा, तिङा, नाम्ना, धातुनाथ तिङां तिङा।
सुबन्तेनेति च प्रोक्तः समासः षड्विधो बुधैरिति।

"करणे यज" इत्यादिविहितणिन्यादीनां भूतकालः कर्त्ता चार्थः तेन राजसूययाजीत्यादौ राजसूयकरणकातीतयाग-करणकव्यापाराश्रय इति बोधः यागकरणकव्यापारस्य यज्यर्थतया यागे च राजसूयादेरभेदविशेषणतया यागकरणक-व्यापारेऽपि राजसूयादिकरणकत्वौचित्यात् अन्यथा पिङ्गाच्ये-त्यादाविव करणाभिन्नविशेषणस्यापि करणत्वस्वीकारात् तेनात्र करणोपपदत्वसम्भवात् णिनिप्रत्यय इति बोध्यम्।

कर्म्मोपपदादिधातूत्तरक्विबादेर्भूतकालः कर्त्ता चार्थस्तेन पारदृश्वाऽग्निचिदित्यादौ तत्तत्कर्म्मकातीतदर्शनादिकर्त्तेति बोधः। एवमनुपपदधातूत्तरक्विबादेरपि भूतः कर्त्ता चार्थस्तेन यज्वेत्यादौ अतीतयागकर्त्तेत्यादिबोधः।

निष्ठासामान्यस्य भूतोऽर्थः तत्रापि क्तस्य सकर्म्मकाकर्म्मकधातु-भेदेन कर्म्म भावश्चार्थः तयोरेवेति प्रागुक्तत्वात् क्तवतोस्तु सर्व्वत्रैव कर्त्तैवार्थः कर्त्तरि कृदित्युक्तेः। तेन पक्वमन्नमित्यादौ अतीतपाककर्म्माभिन्नमन्नं, देवदत्तेन भूतमित्यादौ च देवदत्तकर्त्तृकातीतभवनं, गतवान् भूतवानित्यादौ च अतीतगमनादिकर्त्तेति बोधः, आदिकर्म्मणि विहितक्तस्यापि अतीतकालोऽर्थः क्रियाकूटात्मकक्रियायाः आद्येषु क्रियाक्षणेषु भूतत्वसत्त्वात् तद्भूतत्वमादाय समुदाये भूतत्वव्यवहारो विधानसामर्थ्यादेव भवति। एतज्ज्ञापकाच्चान्यत्र तत्तदतीतक्षणमादाय क्रियायामतीतत्वव्यवहारो न भवतीत्यवधेयं तथा तादृशक्तस्य कर्त्ताप्यर्थः "आदिकर्म्मणि क्तः कर्त्तरि चेति" सूत्रात्। ञीतस्तु धातोरुत्तरवर्त्तिक्तस्य वर्त्तमानोऽप्यर्थो विवक्षावशाच्च व्यवस्थया तत्तत्कालान्वयः क्रियायामित्यवधेयम्। एवं "मतिबुद्धिपूजार्थेभ्यश्चेति" सूत्रेण विहितक्तस्य चकारेणानुक्तसमुच्चायकेन सूचितस्य।

शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि।
हृष्टतुष्टौ तथा क्रान्तस्तथोभौ संयतोद्यतौ।
कष्टं भविष्यतीत्याहुरमृताः पूर्व्ववत् स्मृता इति

शीलितादिपदघटकक्तस्य च वर्त्तमानोऽप्यर्थ इति। गत्यर्थाकर्म्मकश्लिषाद्युत्तरक्तस्य कर्त्ताप्यर्थस्तेन गतो भूत इत्यादौ अतीतगमनादिकर्त्तेत्यादिरीत्या बोधः अत्राकर्म्मकपदमत्यन्तासम्भावितकर्म्मकपरं न त्वविवक्षितकर्म्मकपरं तेन दत्तः भुक्त इत्यादौ

न कर्त्तृबोधः अत एव भाष्ये "भुक्ता ब्राह्मणा" इत्यादौ भावक्तान्तादर्शआदित्वादच्प्रत्यय इत्यभिहितम्। तथा गत्यर्थभिन्नसश्लिषकर्म्मकधातुभ्यः कर्म्मसत्त्वे घञादिप्रत्ययवत् भावे न क्तप्रत्ययः गत्यर्थेभ्यस्तु कर्म्मसत्त्वेऽपि भावे क्तस्तेन "भ्रान्तं देशमनेकधा" इति सिद्धम्। कृतपूर्व्व्यादौ तु पूर्व्वम् कर्म्माविवक्षयैव भावे क्तप्रत्यये पश्चात् वृत्त्युत्पत्त्यनन्तरम् कर्म्मयोग इत्युक्तम्। तथा गत्यर्थादिधातूत्तरक्तस्य सकर्म्मकाकर्म्मकभेदेन कर्म्मभावावप्यर्थौ। "क्तोऽधिकरणे च ध्रौव्यगत्यर्थप्रत्यवसानार्थेभ्यः" इति विहितक्तस्याधारोऽर्थश्चकाराद् यथाप्राप्तं "कर्म्मकर्त्तृभावा अर्थावोध्याः" तेन भोजनार्थकाद्विधानाभावेनाप्राप्तत्वात् न कर्त्तरि क्त इत्यवधेयम्।

लकारादेशानां क्वसुकानजादीनां स्थानिसमानार्थकता अन्वयस्तत्र धात्वर्थांशे कालस्य विशेषणतया कर्त्त्रादेश्च विशेष्यतयेति विशेषः। तथा शतृशानचोरप्रथमासामानाधिकरण्ये साधुत्वमिष्यते दृष्यते च क्वचित् तत्सामानाधिकरण्येऽपि साधुत्वम् इतरक्रियायां स्वप्रकृत्यर्थक्रियाया लक्षणत्वहेतुत्वद्योतने सत्येव "लक्षणहेत्वोः क्रिययोरिति" सूत्रात्। तत्र लक्षणत्वं ज्ञापकत्वमितरव्यावर्त्तकत्वमिति यावत् हेतुत्वमुद्देश्यत्वं कारणत्वञ्च। एते उभे अपि शत्रादिद्योत्ये संसर्गमर्य्यादया इतरक्रियायामन्वयिनी। तथा च यवनाः शयाना भुञ्जते इत्यादौ शयनकर्तृयवनकर्त्तृकं भोजनं शयनलक्ष्यमिति अर्ज्जयन् वसतीत्यादौ अर्ज्जनकर्तृकर्तृकोऽर्ज्जनोद्देश्यको वास इति हरिं स्तुवन्

मुच्यते इत्यादौ हरिकर्म्मकस्तवनकर्तृकर्तृको हरिस्तुतिहेतुको मोक्ष इत्येवं रीत्या बोधः अत्र च सर्व्वत्रैव वर्त्तमानः कालः क्रियान्वयी। वसन् ददर्शेत्यादौ पुनर्न शत्रर्थकालान्वयः तदन्वयिवासस्य प्रधानीभूतदर्शनक्रियायां लिड़ादिना विरुद्धकालबोधनेन प्रधानानुरोधेन गुणभूतस्य कालबोधनौचित्यात् अत एव "धातुसम्बन्धे प्रत्ययाः" इत्यधिकारे धात्वर्थसम्बन्धे सर्व्वेषां प्रत्ययानां विरुद्धकालवाचिनामपि स्वार्थकालबोधकतामन्तरेणैव साधुत्वाभिधानं सङ्गच्छते इत्याकरे स्पष्टम्।

"तुमुण्वुलौ क्रियायां क्रियार्थायामिति" विहिततुमुण्वुलोर्म्मध्ये तुमुनोऽव्ययतया स्वप्रकृत्यर्थसाध्यक्रियैवार्थः "प्रकृत्यर्थे तुमादय" इत्युक्तेः ण्वुलस्तु कर्त्तैवार्थः "कर्त्तरि कृद्" इत्युक्तेः। ताभ्याञ्च द्योतितमुद्देश्यत्वमितरोपपदरूपक्रियायामन्वेति। तथा च "कृष्णं द्रष्टुं याति" इत्यादौ कृष्णकर्म्मकभाविदर्शनोद्देश्यकतत्समानकर्तृकं यानमिति बोधः

समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः।

हर्य्युक्तेः "भविष्यति गम्यादय" इत्यधिकारेण तुमुन्नादेर्भावित्वबोधकतासिद्धेश्च। कृष्णं दर्शको याति इत्यादौ तु कृष्णदर्शनकर्तृकर्तृकं भावितद्दर्शनोद्देश्यकं यानमिति बोधः। इच्छार्थकधातूपपदेषु विहिततुमुनः सामानाधिकरण्यमात्रं द्योत्यमर्थः संसर्गविधया इच्छायामन्वेति न तूद्देश्यत्वमपि इच्छायां तद्बाधात् तथा बोधने पृथक्सूत्रविधानवैयर्थ्यापत्तेश्च। तथा च तात्पर्य्यवशात् कर्म्मतारूपविषयतयाऽपि स्वप्रकृत्यर्थस्य तत्रा-

न्वयः। तेन सनन्तसमानार्थकतया तद्विग्रहवाक्यत्वं तुमुनन्तस्य, सनर्थेच्छायान्तु धात्वर्थस्य कर्म्मतयैवान्वयव्यवस्थापनात् बोधस्तु भोक्तुमिच्छतीत्यादौ भोजनकर्म्मकभोजनसमानाधिकरणकेच्छेत्येवंविधः। "शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुनिति" शकाद्युपपदतुमुनो न समानकर्तृकत्वमर्थः भोक्तुमस्तीत्यादौ तदसत्त्वात् अत एव स्तोतुमर्हतीति विग्रहे "स्तुत्यः स्तुतिकर्म्मेति" कौमुदीकारेणोक्तम्। किन्तु यथायथमन्वययोग्यविषयतादिरूपं तुमुनो द्योत्यमर्थः। तत्र भोक्तुं शक्नोति जानातीत्यादौ भोजनविषयिका शक्तिस्तद्विषयकं ज्ञानमिति बोधः भोक्तुं घटते अर्हतीत्यादौ भोजनसम्बन्धिनी योग्यतेति बोधः योग्यता चान्वयप्रयोजकरूपवत्त्वं तच्च भोजनकर्त्तरीव तत्कर्म्मण्यपि वर्त्तते। एवमन्यत्राप्यूह्यमिति दिक्।

क्रियार्थोपपदे विहितघञादीनामपि उद्देश्यत्वमर्थः "भाववचनाश्च" इति सूत्रात् "तुमर्थाच्च भाववचनात्" इत्यनेन तु ततश्चतुर्थीति विवेकः तुमर्थादिति विशेषणेन च तत्र समानकर्तृकत्वमपि संसर्गविधयाऽन्वेतीति गम्यते तेन पाकाय यातीत्यादौ भाविपाकोद्देश्यकं तत्समानाधिकरणं यानमिति बोधः।

"समानकर्तृकयोः पूर्व्वकाले" इति विहितक्त्वाप्रत्ययस्य स्वप्रकृत्यर्थ एवार्थः समानकर्तृकयोर्धात्वोर्मध्ये पूर्व्वकाले वर्त्तमाना द्धातोः क्त्वा स्यादिति सूत्रार्थस्तेन उत्तरकालीनत्वसामानाधिकरण्याभ्यां स्वप्रकृत्यर्थस्य इतरक्रियायामन्वये क्त्वाप्रत्ययस्य

द्योतकत्वमतः भुक्ता यातीत्यादौ भोजनोत्तरकालीनं तत्समानाधिकरणं यानमिति बोधः ।

णमुल आभीक्ष्ण्यमर्थः क्त्वार्थश्च सामान्यतो बोध्यः विशेषार्थस्तु विस्तरभयान्न प्रतिपादित इति दिक् ।

एवं सपरिकरधातुनिरूपणानन्तरमिदानीं नामानि निरूप्यन्ते । तत्र नामत्वं नाम सुबुत्पत्तिनिमित्तशब्दत्वम् "ङ्याप्प्रातिपदिकात्" इत्यधिकारे सुपो विधानेन नाम्नां तन्निमित्तत्वावगतेः । अत्र ङ्याबन्तयोरपि नामत्वोपगमेन तयोः पृथग्ग्रहणं प्रयोजनान्तरार्थमित्याकरे स्पष्टम् । एवञ्च धातुभ्योऽपि सुबुत्पत्तिवारणाय सूत्रकारेण प्रातिपदिकसंज्ञा कृतेत्यवधेयम् । यथा "अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति" नामसंज्ञाविधायकं सूत्रम् । तथा वाक्यस्यापि सिद्धान्ते अर्थवत्त्वेन तद्वारणाय "कृत्तद्धितसमासाश्च" इति नियमसूत्रमारब्धम् । सूत्रयोश्चैकवाक्यतयाऽयमर्थो लभ्यते कृत्तद्धितभिन्नप्रत्ययान्तान्यत्वे सति समासातिरिक्तसमाससदृशभिन्नत्वे सति धातुप्रत्ययभिन्नार्थवच्छब्दत्वं प्रातिपदिकत्वमिति । समाससदृशत्वञ्च स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वापरावयवत्वं समासस्यापि प्रायशस्तथारूपत्वात् । तथा च पुत्त्रकाम्या बहुगुडेत्यादिकृत्तद्धितादौ पुत्त्रगुडयोः प्रयोगार्हार्थवत्त्वेऽपि बहुकाम्ययोस्तथात्वाभावेन तद्व्युदासः । अत्रार्थवदिति विशेषणेन तयोरर्थान्तरे प्रयोगार्हवृत्तिमत्त्वेऽपि न क्षतिः । एतदेव नामत्वलक्षणमित्यन्ये ।

तानि च नामानि प्रक्रियादशायां चतुर्विधानि रूढलक्ष-

यौगिकयोगरूढभेदात्। तत्र रूढत्वं नाम अखण्डशक्त्याऽर्थबोध-
कत्वं यथा गोघटादेः तत्र हि समुदायशक्त्यैव गोत्वाद्यवच्छि-
न्नस्य बोधनात्। लक्षकत्वं नाम प्रागुक्तलक्षणावृत्त्यार्थबोधकत्वं
यथा गङ्गापदादेः, गङ्गातीरादेस्तत्र लक्षणयैव बोधात्। यौगि-
कत्वं तु खण्डशक्त्या उपस्थापितार्थयोर्योगेनार्थबोधकत्वं यथा
पाचकादेः, तत्र प्रकृतिप्रत्ययाभ्यां स्वावयवाभ्यामुपस्थापितयोः
पाकतत्कर्त्रोर्योगेन पाककर्तृरूपार्थबोधनात्। एवं राजपुरुषा-
देरपि, तत्रापि स्वावयवाभ्यां राजपुरुषशब्दाभ्यामुपस्थापितयोः
राजसम्बन्धिपुरुषयोर्योगेन राजसम्बन्धिपुरुषबोधनात्। योग-
रूढत्वं तु तथाभूतयोगेनार्थबोधकत्वे सति समुदायशक्त्या
विशिष्टार्थबोधकत्वं यथा पङ्कजादेः। तत्र हि पङ्कजनिकर्त्तृ-
रूपयौगिकार्थस्य अवयवैरुपस्थापनात् समुदायेन च पद्मत्वा-
वच्छिन्नस्योपस्थापनात् विशिष्टार्थबोधनमिति विवेकः तत्र
रूढ्यादीनामवान्तरभेदा विस्तरभयान्न लिखिताः। सिद्धान्ते
कृत्तद्धितसमासादिवृत्तौ समुदायशक्तिस्वीकारेण रूढत्वं योग
रूढत्वं वेत्याकरे द्रष्टव्यम्। एवञ्च रूढलक्षकयोगरूढभेदात्
चैविध्यमेव नाम्नामिति बोध्यम्।

तत्र नाम्नां जात्यादयो वक्ष्यमाणा एकैकाः समुदिता श्च
सामान्यतोऽर्था वेदितव्याः। उक्तञ्च हरिणा।

एकं द्विकं त्रिकञ्चैव चतुष्कं पञ्चकं तथा।

नामार्था इति सर्व्वेऽमी पक्षाः शास्त्रे व्यवस्थिता इति

अत्र एकादिपञ्च नामार्थाः मतभेदेन श

व्यवस्थापिता इत्युक्तम्। तत्र अन्वयव्यतिरेकाभ्यां जातेः सर्व्वत्र सत्त्वात् तया च व्यक्त्याक्षेपेण तद्बोधसम्भवात् जातिरेवैका नामार्थ इत्येकनामार्थवादिपक्षः। जातिश्च सर्व्वसाधारणी वक्ष्यमाणलक्षणा बोध्या तेन न गगनादिशब्दानां तथात्वव्याघातः। अथ वा व्यक्तीनामानन्त्यात् व्यभिचाराच्च तत्र शक्तिग्रहस्य दुःशक्यत्वेऽपि जातेरुपलक्षणतया तदनुगमसम्भवेन तत्र शक्तिग्रहस्य सुशक्यत्वात् जात्युपलक्षितव्यक्तिरेव नामार्थ इत्यप्येकनामार्थवादिपक्षः। उक्तञ्च।

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।

शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यतीति।

(एकम्) अनुगतं जात्यादिकम् (सुकरसम्बन्धः) सुशक्यशक्तिग्रहः तत्र हेतुः (न च व्यभिचरिष्यतीति) व्यभिचाराभावादित्यर्थः। जातिविशिष्टा व्यक्तिरेव वा नामार्थः। अत्र पक्षे शक्यताया एकधर्म्मावच्छिन्नत्वादथैक्यमिति बोध्यम्। इत्येवं त्रिधा भेद एकनामार्थवादिपक्षस्य।

द्विकम्। जातिर्व्यक्तिश्च पृथक् नामार्थः तत्रापि मतद्वयम्। जातिव्यक्त्योः पर्य्यायेणैव नामार्थता तेन विकल्पेन कदाचित् जातेरेव कदाचिच्च व्यक्तेर्बोध इत्येकं मतम्। तयोः समुच्चयेन बोधेऽपि तात्पर्य्यवशात् कदाचित् जातेः कदाचिच्च व्यक्तेर्विशेष्यत्वमेकपदोपात्तत्वेन तथात्वौचित्यात्। तेन गौर्नित्या गौश्चलतीत्यादौ विनैव लक्षणां नित्यत्वान्वये जातेः, चलनान्वये च व्यक्तेर्विशेष्यत्वमुपपद्यते इत्यपरम्मतम्। उक्तञ्च भाट्टैः।

नियोगेन विकल्पेन द्वे वा सह समुच्चिते ।

सम्बन्धः समुदायो वा विशिष्टा वैकयेतरेति ।

अस्यायमर्थः (नियोगेन) जातिरेव तदुपलक्षितव्यक्तिरेवेति नियमेनैकैव नामार्थः । (विकल्पेन द्वे वा) पर्य्यायेण जातिर्व्यक्तिर्व्वा द्वे एव नामार्थौ । (सह समुच्चिते) मिलिते ते द्वे एव पृथक् शक्ये । (सम्बन्धः) जातिव्यक्त्योर्विशिष्टबोधहेतुः संसर्गस्तयोः (समुदायो वा, नामार्थस्ते च त्रय एव पृथक् शक्याः । (एकया) जात्या (विशिष्टा) (इतरा) व्यक्तिरेव नामार्थः । अयञ्च पक्षः एकनामार्थतापक्षेऽभिहितः अत्र च द्वे वा विकल्पेनेति पक्षस्यैव व्याकरणे ग्राह्यताशब्द कौस्तुभादौ दर्शिता तेन सरूपैकशेषे व्यक्तिमात्रपक्षालम्बनं जातावेकवचनमित्यादौ जातिमात्रार्थस्य ग्रहणमिति बोध्यम् ।

त्रिकं लिङ्गसहितं प्रागुक्तद्वयमित्यर्थः लिङ्गत्वञ्च प्राकृतगुणगतावस्थात्मको धर्म्म एव तद्विशेषश्च पुंनपुंसकत्वादिः । तथा हि सर्व्वेषां त्रिगुणप्रकृतिकार्य्यतया शब्दानामपि तथात्वेन गुणगतविशेषाच्छब्देषु लिङ्गविशेष इति कल्प्यते स च विशेषः शास्त्रे इत्यमभ्यधायि । विकृतसत्वादीनां तुल्यरूपेणावस्थानात् नपुंसकत्वं सत्वस्याधिक्ये पुंस्त्वम् रजआधिक्ये स्त्रीत्वमिति । एवञ्च लिङ्गस्य शब्दधर्म्मत्वेऽपि शब्देन सहार्थाभेदारोपात् असति बाधके अर्थेऽपि साक्षात् तत्पारतन्त्र्येण वा सर्व्वत्र तस्य विशेषणत्वं, शाब्दबोधे शब्दभानस्येष्टत्वेन शब्दस्य नामार्थतावत् तद्गतलिङ्गस्यापि नामार्थतौचित्यात्

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते इति प्रागुक्तेः
शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा।
नो चेत् श्रोत्रादिभिः सिद्धोऽप्यसावर्थेऽवभासते इति

हर्य्युक्तेश्च शब्दानां नामार्थतावगतेः। (तथा) प्रातिपदिकार्थः। अभेदविवक्षायां तु (श्रोत्रादिभिरेव सिद्धः) ज्ञातः सन् (अर्थे) प्रकारतया भासते इति तदर्थः। युक्तञ्चैतत् पुंलिङ्गः शब्द इति व्यवहारात् "स्वमोर्नपुंसकात्" इति सूत्रे शब्दस्यैव नपुंसकत्वव्यपदेशात् दारानित्यादौ पुंस्त्वान्वयबाधाच्च लिङ्गस्य शब्दधर्मत्वम्, अन्यथैतेषु लिङ्गाद्यनन्वयापत्तेर्व्यवहारसूत्र-निर्द्देशासङ्गत्यापत्तेश्च। तथा अर्थभेदाच्छब्दभेदवत् लिङ्गभेदा-दपि शब्दभेद इति कल्प्यते प्रागुक्तधर्म्मविशेषरूपभेदकसद्भा-वात्। उक्तञ्च भाष्ये

एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमिति।

एवञ्च तटादिशब्दानामनेकलिङ्गत्वव्यवहारः समानानुपूर्व्वीक-त्वेनैव वस्तुतस्तेषां भिन्नानामेव भिन्नलिङ्गत्वमिति दिक्। एकादित्रिकपर्य्यन्तनामार्थस्वीकर्त्तृमते संख्याकारकाणां विभक्त्यै-वोपस्थितिरिति द्रष्टव्यम्।

चतुष्कं संख्यासहितं जात्यादित्रिकमित्यर्थः। तत्र च नामार्थसंख्यानुवादेनैव विभक्त्यर्थसंख्याबोधान्नान्यतरवैयर्थ्यं "सम्भेदे नान्यतरवैयर्थ्य"मित्युक्तेः। यत्र च वृत्तिशब्देषु वि-भक्तिविशेषो नास्ति तत्र यौगिकत्वयोगरूढत्वस्वीकर्त्तॄमतेऽपि संख्याविशेषानवगमात् संख्यात्वेनैवैकत्वसंख्याया नामार्थतया

तथैव तत्र बोधः न तु द्वित्वादेरिति बोध्यम्। यथोक्तं हरिणा।

अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः।

कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते इति।

"कपिञ्जलानालभेते" इति वाक्ये बहुत्वसंख्यायां प्रथमोपस्थितत्वात् त्रित्वस्यैव यथा ग्रहणं तथा संख्यायां प्रथमोपस्थितत्वादेकत्वग्रहणमिति फलितार्थः वृत्तौ नामार्थसंख्यैवाभेदसंख्येति व्यपदिश्यते नास्ति भेदो विशेषग्रहो यस्या इति व्युत्पत्तेः।

उक्तञ्च वाक्यपदीये।

भेदानां वा परित्यागात् संख्यात्मा स तथाविधः।
व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते।
अगृहीतविशेषेण यथा रूपेण रूपवान्।
प्रख्यायते न शुक्लादि भेदापोहस्तु गम्यते इति

अस्यायमर्थः। (भेदानाम्) विशेषाणामेकत्वत्वादीनाम् (परित्यागात्) अग्रहात् तद्रूपात् व्यापारात् (संख्यात्मा) संख्यास्वरूपः (सः एकत्वादिः) (तथाविधः) अभेदैकत्वपदव्यपदेश्य इत्यर्थः। स क इत्यपेक्षायामाह (जातिभागस्य) एकत्वत्वादेः (भेदापोहेन) विशेषाग्रहेण वर्त्तते य इति शेषः। तत्र दृष्टान्तः यथा रूपवान् घट इत्यादौ रूपत्वादिनैव रूपबोधः न शुक्लत्वादिना तथा संख्यात्वेनैव एकत्वबोध इति समुदितार्थः। तथा च विशेषधर्म्माप्रकारकप्रतीतिविषयसंख्यैव वृत्तौ नामार्थः असति बाधके तु प्रथमोपस्थितत्वादेकत्वरूपैव तत्र सा गृह्यते इयमेव संख्यानुद्भूतावयवत्वेन मञ्जूषादौ व्यव-

हृता। अलुक्समासादौ च विभक्त्या विशेषरूपेण तदुप-स्थापनात् तथैव बोधः।

पञ्चकं कारकसहितं चतुष्कमित्यर्थः। तदेतत् स्पष्टतयाऽन्यत्रोक्तम्।

> स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च।
>
> अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमा इति।

चतुष्कादिमतद्वये विभक्तेर्निरर्थकत्वं द्योतकत्वं वेति बोध्यम्।

> द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः।
>
> स्याद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः॥

इत्युक्त्या विभक्तेर्द्योतकताया एव स्वीकारादिति।

अत्र च जातिद्रव्ये न वैशेषिकमतसिद्धे जातिसामान्यादि वाचकनाम्नां वाच्यस्य द्रव्यानात्मकतया तत्र च जात्यभावेनार्थ बोधानुपपत्तेः किन्तु पारिभाषिके एव। तत्र जातिर्नाम त्वत-लादिबोध्या ब्रह्मसत्तादिरूपा उपाधिसामान्यविशेषणधर्मादि पदवाच्या व्यक्तिवृत्तिर्धर्मविशेषः अनुगतैकाकारप्रतीतिजनक-तया च तस्या एकत्वम्।

> सम्बन्धभेदात् सत्तैव भिद्यमाना गवादिषु।
>
> जातिरित्युच्यते

इत्यादिप्रागुक्तवाक्यपदीयात् (सत्ता) ब्रह्मसत्तेत्यर्थः।

> सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृदिति
>
> तुल्यार्थता हि सामान्यं विशेषस्तु विपर्य्यय

इति चोक्तेः। एकत्वकरमेकाकारप्रतीतिजनकमेवं तुल्यार्थता

ऽपीति मञ्जूषा। एवञ्चाकाशादिपदानामपि सामान्यार्थकता तत्तदुपाधिभेदेन भिन्नासु आकाशव्यक्तिष्वनुगताकारबुद्धिजनकतयाकाशत्वजातिसिद्धेः यथोक्तं हरिणा

संयोगिद्रव्यभेदेन कल्पितेषु पृथक्स्थितेः।

तेषु देशेषु सामान्यमाकाशस्यापि विद्यते इति

द्रव्यन्तु व्यक्तिविशेषः लिङ्गसंख्याद्यन्वयि सत्त्वादिपदाभिधेयम् "वस्तूपलक्षणं यत्र" इत्यादिप्राचुक्तेः। इत्येवं समान्यतो नामार्थां निरूपिताः विशेषतस्तु कोषादौ द्रष्टव्याः।

अथ नामनिरूपणानन्तरं नामादिघटितवृत्तिर्निरूप्यते। वृत्तिर्नाम अवयवशक्तिसहकृतसमुदायशक्त्याऽर्थविशेषबोधकः शब्दविशेषः "परार्थाभिधानं वृत्ति" रिति प्राचामुक्तेः। परस्यावयवातिरिक्तस्यार्थस्य बोधसाधनं वृत्तिरिति तदर्थात्। शब्दार्थसम्बन्धरूपवृत्तिमत्त्वाच्च समुदायस्य वृत्तिशब्दवाच्यता। राजपुरुषादिवृत्तौ हि राजपुरुषादिपदं राजसम्बन्धिपुरुषे शक्तमित्याकारिका शक्तिधीरपेयते। तत्रावयवशक्तिर्लौकिकी समुदायशक्तिस्तु शास्त्रिकीति विवेकः। एवञ्चासति बाधके एवावयवशक्तिराद्रियते सति तु बाधके सा परित्यज्यते अतः कृष्णसर्पादौ विनैवावयवार्थबोधं विशिष्टजात्यादिबोधइत्यवधेयम्। यथोक्तं वाक्यपदीये।

पदवाच्यो यथा नार्थः कश्चित् गौरखरादिषु।

सत्यपि प्रत्यये ह्येवं समुदायेन गम्यते इति।

तथा जहत्स्वार्था तु तत्रैव रूढिर्यत्र विरोधिनी इत्युक्तेः रूढावेवावयवार्थतयागद्भूतयवगम्यते।

वृत्तौ च शास्त्रेऽतिरिक्तैव शक्तिरादृता यथोक्तं हरिणा

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।

बहूनां वृत्तिधर्माणां वचनैरेव साधने।

स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रित इति।

समास इति वृत्तिमात्रोपलक्षणं हेतोरविशेषात् (भिन्ना) अतिरिक्ता पङ्कजशब्ददृष्टान्तेन योगरूढत्वपक्षादरणमित्याकरे स्पष्टम्। बहूनामित्यादेरयमर्थः वाक्ये राज्ञःपुरुषइत्यादौ सुन्दरादिविशेषणयोगः विभक्त्योपस्थापितस्वतन्त्रसंख्याविशेषावगमश्च विशेष्यविशेषणपदवैपरीत्यं पुरुषोराज्ञइत्यादि, इतरसम्बन्धियोगश्च राज्ञः पुरुषोदेवदत्तस्य चेत्येवंरूपनानाविधविशेषाः वृत्तौ तु पुनस्तेषामभावेन तद्वारणाय तेषां वाचनिकत्वकल्पने गौरवं स्यात् तस्मात् (एकार्थीभावः) विशेष्यविशेषणावगाह्येकोपस्थितिजनकत्वम, (आश्रितः) इष्यते इति। तदाश्रयणे च राजादेः पदार्थैकदेशतया विशेषणान्वये एकदेशान्वयापत्तेरेव न तदन्वयः एवञ्च "सविशेषणानां न वृत्ति" रित्यादिवार्त्तिकं न्यायमूलकम्। स्वातन्त्र्येणोपस्थितसंख्याविशेषस्यैवान्वयस्वीकाराच्च वृत्तौ तयात्वाभावेनाभेदैकत्वसंख्यैव भासते नान्यसंख्येत्युक्तम्। एवमितरसम्बन्धियोगोऽपि स्वातन्त्र्येणोपस्थितिविरहादेव निरसनीयः। अतएव देवदत्तस्य गुरुकुलमित्यादिसिद्धये "अगुरुकुलादीनामिति" वार्त्तिकान्तरं द्रष्टव्यम् हरिणा

तु तत्रापि समुदायेनैव सम्बन्धस्वीकारेण तदपि वार्त्तिकं न्याय-मूलकमिति प्रतिपादितम् यथा

समुदायेन सम्बन्धो येषां गुरुकुलादिषु।

संस्पृश्यावयवांस्तेषु युज्यन्ते तद्वता सहेति।

अवयवसम्बन्धित्वादेवावयविसम्बन्धित्वमितित त्तात्पर्य्यम्। स्वी-कृतञ्च तेनैव नित्यसापेक्षाणामेकदेशेऽप्यन्वयः

अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिरिति

प्रागुक्तं वदता। अतएव वाक्यपदीये।

सम्बन्धिशब्दः सापेक्षो नित्यं सर्व्वः प्रवर्त्तते।

वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयत इति

सामान्यतः सापेक्षाणामेकदेशान्वयेऽगत्या वाचनिकत्वमङ्गी-कृतम्। द्वन्द्वे तु वाक्ये चकारश्रवणं उद्भूतावयवसंख्यावगमश्च वृत्तौ तु न तथेति शक्त्यन्तरस्वीकारः समाहारद्वन्द्वेषु समा-हारार्थरूपातिरिक्तबोधनात् शक्त्यान्तरमिति बोध्यम्।

चकारादिनिषेधोऽत्र बहुव्युत्पत्तिभञ्जनमिति

हर्य्युक्तेः। अत्र च "समर्थः पदविधिरिति" सूत्रमप्यनु-गुणम् पदनिमित्तकः विभक्त्यादिरूपपदकार्य्योद्देश्यकस्य यो विधिर्विहितः स सर्व्वोऽपि समर्थ इतिसूत्रार्थः। तत्र समर्थः संसृष्टार्थ एकार्थ इति भाष्योक्तेर्वृत्तौ एकार्थबोधकत्वमित्यव गम्यते। समर्थाधिकारे एव वृत्तीनां विधानात् सर्व्वेषामेव वृत्तित्वमित्यवधेयम्।

सा च वृत्तिश्चतुर्विधा सनादिकृत्तद्धितसमासभेदात्। तत्र

तथा जहत्स्वार्था तु तत्रैव रूढ़िर्यत्र विरोधिनी इत्युक्तेः रूढ़ावेवावयवार्थत्यागइतप्रवगम्यते।

वृत्तौ च शास्त्रेऽतिरिक्तैव शक्तिराहृता यथोक्तं हरिणा

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।

बहूनां वृत्तिधर्म्माणां वचनैरेव साधने।

स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रित इति।

समास इति वृत्तिमात्रोपलक्षणं हेतोरविशेषात् (भिन्ना) अतिरिक्ता पङ्कजशब्ददृष्टान्तेन योगरूढ़त्वपक्षादरणमित्याकरं स्पष्टम्। बहूनामित्यादेरयमर्थः वाक्ये राज्ञःपुरुषइत्यादौ सुन्दरादिविशेषणयोगः विभक्त्योपस्थापितस्वतन्त्रसंख्याविशेषावगमस्य विशेष्यविशेषणपदवैपरीत्यं पुरुषोराज्ञइत्यादि, इतरसम्बन्धियोगस्य राज्ञः पुरुषोदेवदत्तस्य चेत्येवंरूपनानाविधविशेषाः वृत्तौ तु पुनस्तेषामभावेन तद्वारणाय तेषां वाचनिकत्वकल्पने गौरवं स्यात् तस्मात् (एकार्थीभावः) विशेष्यविशेषणावगाह्येकोपस्थितिजनकत्वम, (आश्रितः) इष्यते इति। तदाश्रयणे च राजादेः पदार्थैकदेशतया विशेषणान्वये एकदेशान्वयापत्तेरेव न तदन्वयः एवञ्च "सविशेषणानां न वृत्ति" रित्यादिवार्त्तिकं न्यायमूलकम्। स्वातन्त्र्येणोपस्थितसंख्याविशेषस्यैवान्वयस्वीकाराच्च वृत्तौ तथात्वाभावेनाभेदैकत्वसंख्यैव भासते नान्यसंख्येत्युक्तम्। एवमितरसम्बन्धियोगोऽपि स्वातन्त्र्येणोपस्थितिविरहादेव निरसनीयः। अतएव देवदत्तस्य गुरुकुलमित्यादिसिद्धये "अगुरुकुलादीनामिति" वार्त्तिकान्तरं द्रष्टव्यम् हरिणा

विधाः समासा दर्शितास्तन्मूलकमेव हरिवचनमित्यवधेयम्। अनुव्यचलत् पर्य्यभूषयदित्यादौ सुबन्तस्य तिङन्तेन समासः "गतिमतोदात्तवता च तिङापि समास" इति वार्त्तिकात्। अत्रापिर्भिन्नक्रमे गतिमतापीत्यर्थस्तेन पर्य्यभूषयदित्यादाव-गतिमतापि तिङा समासोदाहरणं सङ्गच्छते। गतिसंज्ञकाश्च प्रादयउपसर्गाः ऊर्य्यादिनिपाताश्चेत्याकरे स्थितम्। अत्र च योगविभागस्येष्टप्रयोगसिद्ध्यर्थकतया छन्दस्येवायम्। तेन लौकिकप्रयोगे प्रभवतीत्यादौ द्वे एव पदे नैकपदीभावस्तथात्वे तस्य समासत्वेन प्रातिपदिकतया ततः सुबुत्पत्त्यापत्तिः सामान्यतो नपुंसकतया सुपोलोपस्वीकारे तु प्रकुरुतेइत्यादौ ह्रस्वापत्तिः प्रकुर्व्वीरन्नित्यादौ नलोपापत्तिश्च छन्दसि तूदात्तादि-स्वरसिद्ध्यर्थं तस्य समासत्वस्वीकारेण तदुत्तरं सुबुत्पत्त्या तल्लो-पाङ्गीकारः। अत एव अनुव्यचलदिति भाष्योदाहरणमधि-कृत्य कैयटेनोक्तम्। "समासस्य प्रातिपदिकत्वेन प्रकृतित्वात् केवलायाश्च प्रकृतेरप्रयोगात् भवितव्यमत्र प्रथमैकवचनेन, तस्या-स्तु हलादिलोपः क्रियते इति"। अत एव च "कन्यामायमभि-प्रैतीति" "सूत्रे" अभिप्रैतीति त्रीणि पदानि नत्वेकं पदमिति हरदत्तादयः। एवञ्च धातूपसर्गयोः समासत्वव्यवहारः संहितातानित्यत्वरूपगुणयोगाज्ज्ञात एवातएव भाष्ये

संहितैकपदे नित्या नित्या धातूपसर्गयोरिति

एकपदवत् धातूपसर्गयोरपि संहितानित्यत्वं पृथगेवाभिहित-मन्यथा पृथक् तदुपादानवैयर्थ्यादिति दिक्।

कुम्भकारेत्यादौ "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति" परिभाषया नाममात्रेण सुबन्तस्य समासः। अत्रोपपदं नाम उपसमीपे उच्चारितं पदं सामीप्यञ्च सप्तम्यन्त-पदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थान्वयित्वं तेनोपसर्गव्यवधानेऽपि समासः। अत्र पदं विभक्त्यन्तं तेन राजदर्शीत्यादौ नलोपः।

कटप्रूरायतस्थूरित्यादौ सुबन्तस्य धातुना समासः क्विबन्तस्य धातुत्वस्वीकारात् कृतोऽश्रवणेन गतिकारकेत्यादिना समासासम्भवाच्च। अश्नीत पिबतेति सततमुच्यते यस्यां क्रियायां साऽश्नीतपिबतेत्यादौ तिङन्तस्य तिङन्तेन समासः अन्यपदार्थाधिकारे "आख्यातमाख्यातेन क्रियासातत्ये" इति सूत्रात् समुदायेन स्त्रीत्वविशिष्टक्रियाबोधनात् ततष्टाबिति बोध्यम्।

जहिजोड़ः जहिस्तम्ब इत्यादौ तिङन्तस्य सुबन्तेन समासः "जहिकर्म्मणेत्यादि" सूत्रात्। जोड़ं मौनं जहीत्याख्यान-कर्त्ता समासार्थः।

प्राचीनैस्तु समासचातुर्व्विध्यमेवाभ्युपगतम्। तथाहि समासाधिकारे अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वानामेव नाम-विशेषेणोत्कीर्त्तनेन तएव समासभेदाः। तत्राव्ययीभावत्वं नाम प्राधान्येन पूर्व्वपदार्थबोधकत्वम् उपकुम्भादौ कुम्भसामीप्यस्यैव प्राधान्येन बोधात् अयञ्च समासः प्रायशो नित्यएव तथाचात्र स्वार्थबोधकवाक्यानङ्गीकारेण स्वघटकयावत्पदा-घटितविग्रहेणैव तदर्थबोधनमित्युपेयते। तिष्ठद्गुप्रभृतीनान्तु

तत्प्रकरणविहितत्वेनैवाऽव्ययीभावत्वं सर्व्वेषामेव समासलक्षणानां प्रायिकत्वस्य शास्त्रादौ स्वीकारात् यथोक्तमभियुक्तैः।

समासस्तु चतुर्द्धेति प्रायोवादस्तथाऽपरः।

योऽयं पूर्व्वपदार्थादिप्राधान्यविषयः स चेति।

प्राधान्येन पूर्व्वपदार्थादिबोधकत्वलक्षणविभागोऽपि प्रायिक इति भावः।

प्राधान्येनोत्तरपदार्थबोधकत्वं तत्पुरुषत्वं राजपुरुषो नीलोत्पलं त्रिलोकीत्यादौ उत्तरपदार्थस्यैव प्राधान्येनावगमादर्द्धकायादेस्तथात्वाभावेऽपि "अर्द्धं नपुंसक"मित्यादिविशेषविधानेन तत्प्रकरणविहितत्वादेव तत्पुरुषत्वम्। तन्मध्य एव द्विगुकर्म्मधारयौ प्रविष्टौ। तत्र संज्ञानवबोधकसंख्यापूर्व्वकसमानाधिकरणपदघटितस्तत्पुरुषो द्विगुः "दिक् संख्ये संज्ञायामिति" सूत्रेण विहितपञ्चाम्रादिककर्म्मधारयादिष्वतिप्रसङ्गवारणाय संज्ञानवबोधकेति "संख्यापूर्व्वो द्विगुरिति" सूत्राच्च संख्यापूर्व्वेति। द्विमूर्द्धाद्यन्यपदार्थे तथात्ववारणाय तत्पुरुषेति। द्विगुश्च "तद्धितार्थोत्तरपदसमाहारे चेति" सूत्रात् त्रिविधः तत्र तद्धितार्थे विषये संख्यावाचकपूर्व्वकः समासो नित्यएव षाण्मातुर इत्यादौ केवलद्विगुभागस्याप्रयोगात् अतः षण्णां मातॄणामपत्यमित्येव तत्र विग्रहः एवमुत्तरपदेऽपि पञ्चगवधनादौ केवलद्विगोरप्रयोगात्। उत्तरपदमपि तत्पुरुषान्तरघटकं बहुव्रीहिघटकञ्च तेन त्रयाणां लोकानां नाथ इतिवाक्ये त्रिलोकनाथेति सिद्धम् समाहारे तु द्वित्वबहुत्वाद्याश्रयस्य

प्रातिपदिकार्थस्य तद्गतद्वित्वादिरूपसमाहारे विशेषणत्वेऽपि संख्यारूपनामार्थप्राधान्यादुत्तरपदार्थप्राधान्यमस्त्येव समाहारे इत्यनेनैव संख्याया विशेष्यतया बोधप्रतिपादनादतएव द्वित्व-बहुत्वादौ द्वित्वादिसंख्यान्वयाभावेनौत्सर्गत एकवचनमेवं समा-हारद्वन्द्वेऽपीति दिक् ।

द्विगुविषयपरिहारेण समानाधिकरणपदघटिततत्पुरुषः कर्म्मधारयः "तत्पुरुषः समानाधिकरणः कर्म्मधारय इति सूत्रात् । तत्राप्युत्सर्गतः "विशेषणं विशेष्येणेति" सूत्रात् विशेषणविशेष्यभाव एव विशेषणविशेष्ययोः समासः । तद्भावश्च विषयताविशेषः विशिष्टबुद्धौ प्रकारत्वं, विशेष्यत्वं चेत्येवंरूपः न तु व्यावर्त्त्यव्यावर्त्तकभावः नीलोत्पलादौ उभयोरपि परस्परं व्यवर्त्तकतयोभयविशेष्यतापत्तेः । विषयताविशेषनियामकश्च प्राचीनादिव्यवहारएव यथोक्तं शेखरादौ

"जातिसंज्ञयोर्गुणक्रियापेक्षया विशेष्यत्वमेव, गुणयोः, क्रिय-योः, गुणक्रिययोश्च परस्परं विशेष्यत्वम्, एकदेशसमुदाययो-रभेदविवक्षायाम् एकदेशस्य विशेषणत्वं, व्याप्यव्यापकजात्योर्व्या-प्यस्य विशेषणत्वमिति" । उदाहरणं विस्तरभयान्न लिखितम् । तथोपमानपदस्य तत्सदृशलक्षणया उपमेयपदविशेषणत्वं तत्रापि सामान्यधर्म्मवाचकपदसमभिव्याहाराभावे उपमेय-स्यापि समासे पूर्व्वनिपातः "उपमितं व्याघ्रादिभिः सामान्या-प्रयोगे इति" सूत्रात् बोधस्तु उपमेयविशेष्यकएव प्राधान्ये-नोत्तरपदबोधकत्वं प्रायिकमित्युक्तम् प्राक् ।

समस्यमानपदातिरिक्तपदार्थबोधकत्वं बहुव्रीहित्वं पीताम्बरादौ पीताम्बरातिरिक्ततत्स्वामिनो बोधात् तथात्वं, स च समासो द्विविधः तद्गुणसंविज्ञानातद्गुणसंविज्ञानभेदात्। तत्र समुदायोपस्थाप्ये गुणीभूतस्यापि पदार्थस्य समुदायार्थान्वितबोधक आद्यो, यथा लम्बकर्णमानयेत्यादौ कर्णस्याप्यानयनेऽन्वयस्तद्विना धर्म्मिणोऽप्यानयनासम्भवात् सम्भवे वा तद्देशिच्छेनैवानयनान्वयात् तस्यानयनेऽप्यन्वय इति। तद्भिन्नो द्वितीयः यथा दृष्टसमुद्रमानयेत्यादौ समुद्रादेरानयनानन्वयात् तथात्वम्। प्रकारान्तरेण स द्विविधः समानाधिकरणपदघटितः व्यधिकरणपदघटितश्च तत्राद्यो नीलाम्बरो द्वितीयो दण्डपाणिस्तत्रान्त्यस्य न सर्व्वत्र साधुत्वं "प्रहरणार्थेभ्योनिष्ठासप्तम्यौ" इत्यादिविधाने सत्येव साधुत्वमित्याकरे स्पष्टम्।

प्राधान्येन सर्व्वपदार्थबोधकत्वं द्वन्द्वत्वं प्राधान्यञ्चात्र स्वघटकपदार्थांशे विशेषणतानापन्नत्वं तेन परस्परं विशेष्यत्वाभावेऽपि नासम्भवः। स च द्विविधः इतरेतरसमाहारभेदात्। तत्राद्योऽगृहीतविशेषद्वित्वादिसंख्याविशिष्टनामार्थबोधकः, द्वितीयस्तु नामार्थान्वितताहृशसंख्याबोधक इति। संख्याया अपि नामार्थतया सर्व्वपदार्थप्राधान्यसम्भवादित्युक्तं प्राक्।

अत्रेदं बोध्यम् सर्व्वत्र समासे द्विपदघटितत्वं द्वन्द्वबहुव्रीह्योस्तु बहुपदघटितत्वमपि "अनेकमन्यपदार्थे" इति सूत्रभाष्यादौ स्पष्टम्। तथाऽसति बाधके विशेषणानां पूर्व्वनिपातः सर्व्वसमासे, द्वन्द्वे स्वाल्पाजादेरित्यप्याकरे स्पष्टमित्यलं विस्तरेण।

अथ वृत्तिषु तद्धिता निरूप्यन्ते। तत्र तद्धितत्वं नाम पद-निमित्तकत्वे सति स्वान्तत्वेन नामसंज्ञानिमित्तप्रत्ययत्वं क्वात्सु तद्वारणाय सत्यन्तं क्यजादिषु तद्वारणाय नामसंज्ञेति समास-वारणाय प्रत्ययेति। "प्राग्दिशो विभक्ति" रित्यधिकारीय-तसिलादेरपि नामसंज्ञानिमित्तत्वमस्त्येव तदुत्तरत्र तद्धितान्त-दोत्पत्त्या कुतस्त्यमित्यादिप्रयोगात् परन्तु "तद्धितश्चासर्व्वविभक्ति"रित्यनेन तस्याव्ययत्वमिति विशेषः। तद्धिताश्च तत्तदर्थ-भेदेन स्वरूपभेदेन च बहुविधाः तेषाञ्चार्थास्तत्तत्सूत्रोपात्ता-विशेषतो वेदितव्यास्तेषु च संक्षेपात् केषाञ्चिदर्थाः प्रदर्श्यन्ते। "शिवादिभ्यो"ऽणित्यादिसूत्रजातेन विहिताणादीनामपत्य-मर्थस्तत्र च प्रकृत्यर्थस्य सम्बन्धितयान्वयस्तेन शैवइत्यादौ शिव-सम्बन्ध्यपत्यमिति बोधः। "सास्य देवतेत्यादौ" देवतासम्बन्धी, देवता सम्बन्धी च खण्डशो वा तत्तत्प्रत्ययार्थस्तत्र प्रकृत्यर्थस्य देवतायामभेदेनान्वयस्तेनाग्नेयमित्यादावग्न्यभिन्नदेवतासम्बन्धि द्रव्यमिति बोधः तदुक्तमभियुक्तैः

प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम्।
अभेदश्चात्र संसर्ग आग्नेयादाविति स्थितिः।
देवतायां प्रदेये च खण्डशः शक्तिरस्तु वेति।

एवं सोऽस्य निवासस्तदस्य प्रहरणमित्यादावपि द्रष्टव्यम्। तस्य विकार इत्यादौ विकारः प्रत्ययार्थः तच्च स्वारम्भकावय-वारब्धत्वं तदेकदेशे च प्रकृत्यर्थस्य सम्बन्धितयान्वयस्तेन हैम इत्यादौ हेमारम्भकावयवारब्धइति बोधः।

तदस्यास्तीत्यादिना विहितमतुवादेर्वर्त्तमानसम्बन्ध एवार्थः सम्बन्धे च प्रकृत्यर्थस्य निरूपितत्वादिसम्बन्धेनान्वयस्तेन गोमानित्यादौ गोनिरूपितवर्त्तमानसम्बन्धवानिति बोधः सम्बन्धश्चाभेदातिरिक्तो ग्राह्यस्तेन तादात्म्येन घटवान् घट इत्यादि न प्रयोगः। गोमानासीदित्यादौ तु प्रधानीभूतक्रियाकालानुरोधेन सम्बन्धमात्रबोध इत्याकरे स्पष्टम्। तथा सम्बन्धे बहुनिरूपितत्वनिन्दितनिरूपितत्वादयो मतुपां द्योत्या अर्था बोध्याः

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।

सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादय इति।

वृद्धोक्तेः। सरूपमतुबन्तप्रकृतेश्च सरूपास्तादृशा नोत्पद्यन्ते। उक्तञ्च भाष्ये

सरूपात् मतुबर्थीयात् सरूपो मतुबर्थकः।

शैषिकाच्छैषिको नेष्टो न सनन्तात् सन्निष्यते इति

स्वरूपादित्यस्य सर्वत्राकृत्यान्वयः।

तदधीते तत्र भव इत्यादिविहितप्रत्ययजातानां तत्तत्सूत्रोपात्तक्रियाकर्त्तैवार्थः प्रकृतेश्च तत्तत्कर्म्मकादौ लक्षणा तस्य च तदेकदेशक्रियायामभेदेनान्वयस्तेन पदक इत्यादौ पदकर्म्मकाभिन्नाध्ययनकर्त्ता, ग्राम्य इत्यादौ ग्रामाधिकरणकाभिन्नभवनकर्त्तेत्येवं रीत्या बोधः।

"तेन रक्तं रागात्" इत्यादिविहितानान्तु तत्तत्क्रियाकर्म्मैवार्थः प्रकृतिलक्षणादिकं पूर्व्ववत्। "तेन तुल्यं क्रिया चेद्वति" रिति विहितवतेस्तुल्य एवार्थ स्तस्य च क्रिया

चेत्युक्तेः समभिव्याहृतक्रियायामेवान्वयः तदेकदेशे तुल्यत्वे च प्रकृतेः स्वार्थकर्तृकादितत्तत्क्रियाणां लक्षणया बोधनात् प्रतियोगितासम्बन्धेन तदर्थस्यान्वयस्तेन विप्रवदधीते इत्यादौ विप्रकर्तृकाध्ययनसदृशाध्ययनमिति बोधः। अत्र क्रिया चेदित्युक्तः क्रियातुल्यत्वएवास्य वतेः साधुत्वम्। "तत्र तस्येवेति" विहितस्य तु गुणजात्यादिनापि तुल्यत्वे साधुत्वमिति विवेकः।

"तस्य भाव" इत्यादिविहितत्वतलादेः प्रकृत्यर्थे प्रकारतया भासमानधर्म्मएवार्थः

"प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थे प्रकारताम्।
धर्ममात्रं वाच्यमित्युक्तेः"

(प्रयोगोपाधिम्) (शब्दप्रवृत्तिनिमित्तम्) (प्रकारताम्) प्रकारतया भासमानम् (वाच्यम्) त्वतलादेरित्यनुषङ्गः। "यस्य गुणस्य भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति" वार्त्तिकमप्यत्रानुगुणं (गुणस्य) विशेषणतया भासमानस्य (भावात्) सत्त्वात् (द्रव्ये) सत्वे सर्व्वनामपरामर्शयोग्यादिरूपे (शब्दनिवेशः) शब्दशक्तिर्यद्धर्म्मविशिष्टे शक्तिरिति यावत् त्वतलावित्युपलक्षणम्। तथा च द्रव्यगुणादिशब्देभ्यो जातेः, शुक्लमहदणुह्रस्वादिभ्यो-गुणस्य, पाचकादिभ्यः क्रियायाः, पीताम्बरादिभ्यः सम्बन्धस्य, त्वतलादिना बोध इत्यवधेयम्।

आतिशायनिकप्रत्ययानां तरबादीनां प्रकृतेरतिशयकर्तृत्वविशिष्टलक्षणाया द्योतकतया स्वार्थिकप्रत्ययत्वं तेन "स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यनुवर्त्तन्ते" इति वर्त्तिकोक्तेः

प्रकृतिलिङ्गवचनानुगमस्तदन्तस्य। अतिशयश्चात्राभिभवस्तेनाभिभवस्य सकर्म्मकत्वेन द्वित्वबहुत्वाद्याश्रयसजातीयकर्म्मकाभिभव एव तरप्तमबादिना व्यवस्थया द्योत्यते। अभिभवकर्त्तृरूपातिशायनत्वस्य च गुणक्रिययोरेव सम्भवात् तद्वाचकपदादेव तरबादयः तेन द्रव्यस्य स्वतस्तदभावेन स्वगतगुणक्रियागतातिशयेन तद्वत्ताभ्युपगम्यतेऽतो गुणक्रियाविशिष्टद्रव्यवाचकादेव तत्साधुत्वं न केवलद्रव्यवाचिनो डित्यादेः, जातेस्तु स्वतस्तदभावेऽपि तदाश्रयव्यक्तिनिष्ठगुणादिगतातिशयेन तद्वत्तामादाय तद्वाचकात्तत्साधुत्वमिति द्रष्टव्यम्। अत्रेदं बोध्यं तिङन्तप्रकृतिकतरबादीनां व्यवस्थयैव द्वित्वाद्याश्रयातिशयविवक्षया प्रयोगः तिङोपस्थाप्याश्रयादेर्द्वित्वाद्यन्वयसम्भवेन सजातीयाभिभवकर्म्मलाभात् अव्ययानान्त्वसत्वतया तदर्थस्य संख्याश्रयत्वाभावात् सजातीयाभिभवकर्म्माभावाच्च सर्व्वत्रैव पर्य्यायेण तरबादिप्रत्यय इति।

"प्रशंसायां रूपबिति" रूपपः प्रकृतेः प्रशंसाविषयत्वविशिष्टस्वार्थलक्षणाद्योतकत्वं प्रशंसा च परिपूर्णता तेन चौररूप इति सिद्धं "क्रियाप्रधानमाख्यात" मित्युक्तेः पचतिरूपमित्यादौ प्रकृतेरसत्वतया लिङ्गसंख्याऽनन्वयेन प्रकृतिवल्लिङ्गसंख्याऽसम्भवात् सामान्यतो नपुंसकत्वं, नामार्थे प्रथमा, उत्सर्गत एकवचनञ्चेति मनोरमा। एवं पचतिकल्पमित्यादावपि। तेन पचतोरूपं पचन्तिरूपमित्येव साधुरिति बोध्यम्।

ईषदसमाप्त्यर्थककल्पबादीनां प्रकृतेरीषदसमाप्तत्तद्धर्म्म-

प्रयोज्यसादृश्यवति लक्षणाद्योतकत्वं तेन गुड़कल्पा द्राक्षेत्यादौ ईषदूनमाधुर्य्यप्रयोज्यगुड़सादृश्यवदभिन्ना द्राक्षेति बोधः। ईषदूनत्वं चात्राप्रचुरत्वम्। "विभाषासुपो बहुच् पुरस्तात्त्विति" बहुचोऽप्येवमर्थबोधादि। अत्र च भाष्ये पुरस्तादित्यस्यावर्त्तनात (पुरस्तात्) प्रत्ययोत्पत्तेः पूर्व्वं ये लिङ्गवचने ते एव स्तः प्रत्ययोत्पत्तावित्यर्थः। ईषदसमाप्त्यर्थकप्रत्ययानां मध्ये बहुच एव प्रकृतिवल्लिङ्गवचनत्वनियमेनान्यत्र कल्पवादौ न प्रकृतिवल्लिङ्गवचनत्वं तेन बहुगुड़ो द्राक्षेत्येव प्रयोगः कल्पबादौ तु विशेष्यनिघ्नता अत एव "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" इति वार्त्तिकोक्तिः तेन कुटीरः शुण्डारं इत्याद्यपकर्षार्थके रप्रत्ययादौ न प्रकृतिवल्लिङ्गत्वमिति द्रष्टव्यम्। इत्येवं निरूपिताः केषांचित्तद्धितानामर्थाः।

प्राचीनैरेकशेषोऽप्येको वृत्तिभेदोऽङ्गीकृतः शिष्यमाणस्य लुप्यमानार्थाभिधायित्वस्वीकारेण तत्रापि परार्थाभिधानरूपवृत्तित्वसत्त्वात्। "सरूपाणामेकशेष एकविभक्ता"विति सूत्रे एकविभक्तिषु तुल्यरूपाणां मध्ये शिष्यमाण एक एवैकशेष इत्यन्वर्थसंज्ञालाभः। एकस्य च प्राप्तत्वादितरनिवृत्तिरेवात्र विधीयते अयञ्च द्वन्द्ववत् सहभावविवक्षाविषय एव प्रवर्तते यद्यपि अक्षा भुज्यन्तां भज्यन्तां दृश्यन्तामित्यादावेकाक्षपदस्यैवावृत्त्या तत्तत्क्रियान्वयवत् घटा इत्यादावप्येकघटपदस्य तत्तद्व्यक्तिबोधकत्वेऽपि तन्त्रेणोच्चारणादावृत्त्या बहूनां

बोधः सम्भवतीत्येकशेषविधानवैयर्थ्यं, तथापि प्रत्यर्थं शब्दनिवे-शस्यापि व्यवस्थापनेन व्यक्तिभेदापेक्षया द्वन्द्वप्राप्तौ तद्बाधनार्थ-मयमारम्भः विरूपैकशेषविधानार्थश्च। अयञ्च सुबुत्पत्तेः पूर्व्व-मेवोत्पद्यतेऽतः पदनिमित्तकद्वन्द्वबाधक इत्येके। विभक्त्युत्-पत्तेः परमेवेत्यन्ये। तत्र पूर्व्वेषां मते पदनिमित्तकत्वाभावेन समासत्वाभावात् पन्थानावित्यादौ न समासान्तः। इतरे-षान्तु मते समासान्तविधौ तद्भिन्नत्वनिवेशान्न समासान्त इति विवेकः। धातुषु तु नास्य प्रवृत्तिरेकनिष्ठानेकव्यापा-राणामेकेनैव धातुना बोधनवदनेकनिष्ठानामपि तेषां बोध-नसम्भवात् अत्र च द्वन्द्व इव वाक्यभेदेनैव तत्तत्क्रियान्वयः

सह्वैकशेषद्वन्द्वेषु केचित् सामर्थ्यलक्षणम्।

प्रत्याश्रयमवस्थानं क्रियाणां प्रतिजानते

इत्यादिहरिवचनात्।

धात्वादिनिरूपणानन्तरमिदानीं तदर्थविशेषद्योतका नि-पातानिरूप्यन्ते। तत्र निपातत्वमसत्त्ववाचित्वे सति चादिगण-पठितत्वं "चादयोऽसत्त्वे" इति सूत्रात्। स्वरादीनां सत्त्ववाचि-तया न निपातत्वं चादीनाञ्च द्योत्यार्थवत्त्वेन नामतया तदर्थे संख्याविशेषान्वयासम्भवेन सामान्यत एकवचनान्तत्वेऽपि "अव्य-यादाप्सुपः" इति तदुत्तरसुपो लोपः। तेषाञ्च प्रायशः सर्व्वेषां स्वयुक्तनामधातूनां तत्तद्विशेषार्थद्योतकत्वम्॥

तयोरर्थाभिधाने तु व्यापारो नैव विद्यते।

यदर्थद्योतकौ तौ तु वाचकः स विचार्य्यते॥

संग्रामयतिधातोस्तु सोपसर्गाद्विधिः स्मृतः।

इति हर्य्युक्तेः। वस्तुतस्तु तत्र संशब्दस्य नोपसर्गत्वं किन्तु अवधीरयदिधातोरिव तत्प्रतिरूपकशब्दान्तरत्वमित्याकरे स्पष्टम्। उपसर्गाणां द्योत्यार्थविशेषा अपि भाष्ये दर्शिता यथा।

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते।

तमेव विशिनष्टन्य उपसर्गगतिस्त्रिधेति।

प्रतिष्ठत इत्यादावाद्यं स्थाधात्वर्थबाधेन गतिबोधनात्। प्रकरोतीत्यादौ द्वितीयं क्रियाप्रकर्षस्यैव बोधनात्। अनुमिनोतीत्यादौ तृतीयं विशिष्टज्ञानबोधनादिति विवेकः। एवञ्चाडादिव्यवस्थादर्शनादुर्य्यादिनिपातानामपि तथात्वम्। तथा तेषां पृथक्प्रयोगाभावेनापि न वाचकत्वं तथा हि यदि पदान्यपि चादीनि स्वातन्त्र्येण कञ्चिदर्थमवबोधयेयुस्तदा प्रयोज्येरन्नपि तानि केवलान्येव न च तथा प्रयुज्यन्ते

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः

इति हर्य्युक्तेः। स्वातन्त्र्येणार्थबोधकत्वाभावादेव न तदर्थे विशेषणयोगः तदुक्तमभियुक्तैः

विशेषणाद्ययोगोऽपि प्रादिवच्चादिके सम इति।

ततश्च पटोघटश्चेत्यादौ घटपदमेव तत्समुच्चिते, चन्द्र इव मुखमित्यादौ च चन्द्रपदं तत्सदृशे, लाक्षणिकं बोध्यम्। एकदेशान्वयस्वीकाराच्च सामान्यधर्म्मस्य प्रयोज्यतया सादृश्येऽन्वयात् सौन्दर्य्येण चन्द्र इवेत्यादौ नासङ्गतिः। अत एव "शरैरुस्रैरिवोदीच्यान्" इत्यादौ विशेषणोस्रादिपदोत्तरं तृतीयाद्युप-

पत्तिरन्यथा नामार्थे प्रथमापत्तेः निपातनामार्थयोर्भेदेनैवा-न्वयस्य स्वीकर्त्तव्यतया नामार्थयोश्च भेदान्वयनियमे निपातेतरसङ्कोचापत्तेश्च। तदुक्तमभियुक्तैः

पदार्थः सदृशान्वेति विभागेन कदापि न।

निपातेतरसङ्कोचे प्रमाणं किं विभावयेति।

(सदृशा) समानाधिकरणपदोपस्थाप्येन (अन्वेति) अभेदेनेति शेषः (विभागेन) तद्भिन्नेनेत्यर्थः। अत एव नञ्तत्पुरुषादौ उत्तरपदे एव विशिष्टतत्तदर्थलक्षणा तेन तस्यैव प्राधान्यात् सर्व्वनामकार्य्यपुरुषवचनादिव्यवस्था सिद्ध्यति तथा च अत्वं पचसि अनहं पचामीति युष्मदादिसामानाधिकरण्यात् पुरुषव्यवस्था अनेकमित्यादौ वचनव्यवस्था असे इत्यादौ सर्व्वनामकार्य्यञ्च नञो वाचकत्वे नैतदुपपद्यते तदेतदुक्तम्।

नञ्समासे चापरस्य प्राधान्यात् सर्व्वनामता।

आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्व्ववदिति।

(अतिसर्व्ववत्) (असः) इत्यादौ सर्व्वनामकार्य्याभावो नहीत्यर्थः अत्रारोपितत्वपदं सादृश्यादेरप्युपलक्षकम्। तथा च

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।

अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

इत्युक्तनञर्थषाड्विध्यमपि द्योत्यार्थापेक्षयैवेत्यवधेयम्। तत्र अब्राह्मण इत्यादौ ब्राह्मणसादृश्यम्, अपापमित्यादौ अभावः, अघट इत्यादौ भेदः, अनुदरेत्यादौ अल्पत्वम्, अपशुरित्यत्राप्राशस्त्यम्, असुर इत्यत्र विरोधो, नञ्द्योत्य इत्युदाहरणानि।

एवं विग्रहवाक्येऽपि बोध्यम् तथा च प्रसज्यप्रतिषेधार्थकनञर्थस्य क्रियायामेवान्वयनियमेन नञ्समभिव्याहृतक्रियापदमेव तत्त-दभावे लाक्षणिकमिति बोध्यम्। नव्यास्तु "निवृत्तपदार्थे इति" भाष्योक्तेः

"अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाश्रयात्"

इत्युक्तेः

"निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः"

इति सामान्यतः केषाञ्चिन्निपातानां वाचकत्वोक्तेश्च नञेव-कारादीनां वाचकत्वपक्षमवलम्ब्यागत्या प्रागुक्तदोषजालं यथा-कथञ्चित् निराचक्रुरित्यन्यत्र विस्तरः। अत्र पक्षे च नञोऽभाव-त्वेन भेदेऽत्यन्ताभावे च शक्तिरन्यत्र लक्षणा। तत्रापि निय-मविशेषाश्रयणान्नातिप्रसङ्गः। तथा हि अनुयोगिप्रतियोगि-बोधकपदयोः सामानाधिकरण्ये भेदबोधकता, वैयधिकरण्येऽत्य-न्ताभावबोधकता, यथा घटः पटो नेति, भूतले घटो नास्तीति। एवकारस्य तु अन्ययोगायोगात्यन्तायोगव्यवच्छेदा अर्थास्त-द्विशेषकास्तु समभिव्याहारविशेषः। तथा च समानाधिकरण-विशेष्यपदसङ्गतस्य व्यधिकरणविशेषणसङ्गतस्य च एवकारस्यान्य-योगव्यवच्छेदार्थकता यथा पार्थ एव धनुर्द्धर इत्यादौ विशेष्य-सङ्गतस्य। बोधस्तु पार्थान्यतादात्म्याभाववत्प्रशस्तधनुर्द्धराभिन्नः पार्थ इति धनुर्द्धरपदस्य तत्प्राशस्त्ये लक्षणास्वीकाराच्च तथा बोधः। एवं पृथिव्यामेव गन्ध इत्यादौ विशेषणसङ्गतस्य बोधस्तु पृथिव्यन्यसमवेतत्वाभाववान् गन्धः पृथिवीवृत्तिरिति। समा-

नाधिकरणविशेषणसङ्गतस्य तु अयोगव्यवच्छेदार्थकता यथा शङ्खः पाण्डर एवेत्यादौ। अत्र च व्युत्पत्तिवैचित्र्यात् अवच्छेदावच्छेदेनैवान्वयः तेन शङ्खत्वावच्छेदेन पाण्डरतादात्म्याभावस्य व्यवच्छेदः। बोधस्तु शङ्खत्वव्यापकस्वरूपसम्बन्धेन पाण्डरतादात्म्याभावाभाववान् शङ्खः पाण्डराभिन्न इति। क्रियासङ्गतस्य तस्य तु अत्यन्तायोगव्यवच्छेदार्थकता अत्र च सामानाधिकरण्येनैवान्वयः यथा नीलं सरोजं भवत्येवेत्यादौ बोधस्तु सरोजकर्तृकं भवनं नीलकर्तृकत्वात्यन्ताभावाभाववदिति। सर्व्वेषाञ्च निपातानामव्ययत्वमस्त्येव "स्वरादिनिपातमव्यय"मिति सूत्रात् अव्ययत्वं तु लिङ्गत्रयवचनत्रयाधीनविशेषकार्य्यरहितनामत्वं तदुक्तम्।

सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु।
वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययमिति।

"स्त्रिया"मित्यधिकारविहितटाबाद्यन्तानामपि नामत्वं स्वीक्रियते "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति" परिभाषया तेषां नामत्वसिद्धिः। तथानुकरणशब्दानामपि तथात्वम्। तदुक्तमभियुक्तैः।

उणाद्यन्तं कृदन्तञ्च तद्धितान्तं समासजम्।
शब्दानुकरणं चैव पञ्चकं नामसंज्ञितमिति।

तेन चोऽवधारणे तुरप्यर्थे इत्यादौ प्रथमादिस्थितिः अनुकार्य्याभेदविवक्षायान्तु न तेषां नामत्वम् "अत एव गवित्याहेत्याद्युक्तिः" तच्च प्राक् प्रपञ्चितम्।

इदानीं नामप्रकृतिकाः सुपो निरूप्यन्ते। तत्र सुप्त्वं नाम तिङ्भिन्नत्वे सति संख्यावाचकप्रत्ययत्वम्

सुपां कर्म्मादयोऽप्यर्थाः संख्या चैव तथा तिङामिति भाष्येऽपिना संख्यासमुच्चायनात् "द्व्येकयोर्द्विवचनैकवचने" इत्यादिसूत्रात्,

द्यो.तिकावाचिका वा स्युर्द्वित्वादीनां विभक्तय इति हर्य्युक्तेश्च सुपां च लाघवात् संख्यायामेव शक्तिः कर्म्मादिषु तु निरूढलक्षणेत्यवधेयम्। सुपश्च प्रथमादिभेदात् सप्तविधास्ता अपि वचनभेदात् प्रत्येकं त्रिविधा इत्येकविंशतिविधाः।

तत्र प्रथमाया नामार्थादिद्योतकता "प्रातिपदिकार्थलिङ्ग-परिमाणवचनमात्रे प्रथमेति" सूत्रात् तथा च एको द्वावित्यादौ नामार्थसंख्यानुवादेन विभक्त्यर्थसंख्याबोधनप्रकारवत् नामार्थानुवादेन प्रथमार्थनामार्थबोधनमिति द्रष्टव्यम्। अत्र प्रातिपदिकार्थो जात्यादि, द्रव्यञ्च ग्राह्यः, लिङ्गवचनयोः पृथक्-कीर्त्तनात्। आढको व्रीहिरित्यादौ परिमाणं प्रथमार्थस्तत्रा-भेदेनाढकादेरन्वयस्तस्य च परिच्छेद्यतासम्बन्धेन व्रीह्यादावन्वयस्तेनाढकाभिन्नपरिमाणपरिच्छेद्यो व्रीहिरिति बोधः। अत्र मात्रग्रहणात् कर्म्माद्याधिक्ये द्वितीयादिसमावेश इति सूचितम्। तत्राप्ययं विशेषः कर्म्मादिशक्तिषु लकारादिनोक्तेषु तत्समानाधिकरणेषु च प्रथमैव "तिङ्समानाधिकरणे प्रथमेति" वार्त्तिकात्। एवञ्च तत्र प्रथमापि कारकविभक्तिरिति भाष्यसम्मतम्। प्रकृतिविकृतिस्थले तु उभयोरपि

तिङोक्तत्वात् प्रथमा परन्तु तत्र तिङा प्रकृतेरेव संख्यानुवादेन संख्या बाध्यते न तु विकृतेः, तेन एकवृक्षः पञ्च नौका भवतीत्येव प्रयोगः। यथोक्तमभियुक्तैः

प्रकृतेर्विकृतेर्वापि यत्रोक्तत्वं द्वयोरपि।

वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तिति।

अत्र यत्रेत्युक्तेः क्वचिदुक्तत्वाभावे नामार्थे प्रथमेति सूचितं तेन मृगो भूत्वा मारीचो जगामेत्यादौ मृगस्योक्तत्वाभावात् नामार्थे एव प्रथमा तत्र चागत्या नामार्थस्यापि पररीत्या कर्तृत्वेन धात्वर्थभवने साक्षादन्वयस्वीकारः। प्रकृतेर्विकृतेरित्युक्तेश्च उद्देश्यविधेयभावस्थले नायं संख्याग्रहणनियम इति द्रष्टव्यम्।

"सम्बोधने चे"ति विहितप्रथमायाः सम्बोधनमर्थः। सम्बोधनञ्च प्रवर्त्तनाविषयबोधनादिफलकाभिमुख्यम् तदुक्तं हरिणा

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।

प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते इति।

अत्र क्रियासु विनियुज्यते इत्युक्तेः अजानि देवदत्तेत्यादावपि जानीहीति विनियोगक्रियाध्याहारः अधिकमुक्तं प्राक्। सिद्धस्येत्युक्तेश्च सम्बोधनस्यानुवाद्यविषयता तेन राजा भव युध्यस्व, इन्द्रशत्रुर्वर्द्धस्वेत्यादौ राजादेर्विधेयत्वान्न सम्बोध्यत्वमिति बोध्यम्।

द्वितीयाद्यो विभक्तयो द्विविधाः कारकार्था इतरार्थाश्च। तत्र अपादानादिकारकविशेषसंज्ञकार्थत्वमाद्यानां, किञ्चित्क्रियायोगनिमित्तकारकत्वभिन्नसम्बन्धार्थकत्वमन्यानाम्। तत्र

कारकत्वं नाम क्रियाजनकशक्तिमत्त्वं "करोति क्रियां निर्वर्त्तयतीति" भाष्ये कारकशब्दव्युत्पादनात् "साधकं क्रियानिष्पादकं कारकसंज्ञं भवती"ति वार्त्तिकोक्तेश्च, द्रव्यस्य स्वतस्तथात्वाभावेऽपि शक्त्या विशिष्टस्यैव तथात्वम्। क्रियायाञ्च शक्तेरेवान्वयव्यतिरेकसत्त्वात् कारकत्वमिति मतान्तरम्। तदुक्तं हरिणा।

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।

क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुरिति।

शक्तिशक्तिमतोरभेदाच्च द्रव्यं कारकमिति व्यवहार इत्यवधेयम्। एवञ्च क्रियाजनकत्वेन सर्व्वेषां कर्तृत्वेऽपि स्वस्वावान्तरव्यापारविवक्षयैव करणत्वादिकम्। यथोक्तं हरिणा।

निष्पत्तिमात्रे कर्तृत्वं सर्व्वत्रैवास्ति कारके।

व्यापारभेदापेक्षायां करणत्वादिसम्भव इति।

तद्भेदश्च मञ्जूषायां दर्शितो यथा। "कर्तुः कारकान्तरप्रवर्त्तनव्यापारः। करणस्य क्रियाजनकाव्यवहितव्यापारः। क्रियाफलेनोद्देश्यत्वव्यापारस्य कर्म्मणः। कर्तृकर्म्मव्यवहितक्रियाधारणव्यापारोऽधिकरणस्य। प्रेरणानुमत्यादिव्यापारः सम्प्रदानस्य। अवधिभावोपगमव्यापारोऽपादानस्येति"। तत्र कर्त्तृकरणाधाराणां क्रियाजनकत्वं सुव्यक्तं तैर्विना क्रियानुत्पत्तेः फलरूपक्रियाजनकत्वेन विशिष्टक्रियाजनकत्वाच्च कर्म्मणस्तथात्वं। घटं स्मरति कटं करोतीत्यादौ च बुद्धिस्थघटादेरपि पूर्व्वकालत्वेन स्मरणादिहेतुत्वात्तथात्वम् अतएव तेषु कर्तृत्वविवक्षया काष्ठं पचति स्थाली पचति ओदनः पच्यते इत्यादि

प्रयोगः। अपादानस्य अवधिभावोपगमेन हेतुत्वात् सम्प्रदानस्य च दातृबुद्धिस्थतया पूर्व्वकालत्वेन हेतुत्वात् क्रियानिर्व्वाहकत्वेऽपि न कर्तृत्वविवक्षा अनभिधानात् तदुक्तं भाष्ये "पर्य्याप्तं करणाधिकरणकर्म्मणामेव कर्तृत्वं निदर्शितमपादानादीनां कर्तृत्वानिदर्शनायेति"।

तच्च कारकं षड्विधम् अपादानसम्प्रदानकरणाधिकरणकर्म्मकर्तृभेदात्। एतेषाञ्च एकस्यां क्रियायामुभयप्राप्तौ "विप्रतिषेधे परं कार्य्य"मित्युक्तेरुत्तरोत्तरप्राबल्यं तदुक्तं हरिणा

अपादानसम्प्रदानकरणाधारकर्म्मणाम्।
कर्त्तुश्चोभयसम्प्राप्तौ परमेव प्रवर्त्तते इति।

गुणप्रधानक्रिययोरेकस्मिन् द्रव्ये उभयशक्तिप्रसङ्गे तु "प्रधानेन व्यपदेशाभवन्तीति" न्यायात् कार्य्यस्य प्रधानानुरोधित्वात् प्रधानशक्तिबोधिकैव विभक्तिः प्रयुज्यते गुणक्रियाशक्तिस्तु तात्पर्य्यवशादेव तत्र प्रतीयते तदुक्तं हरिणा

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते।
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यथा गुणे तथा तद्वदनुक्तापि प्रतीयते इति

अतः स्थित्वाश्वेन गच्छति, प्रविश्य गृहान्निःसरतीत्येव प्रयोगः।

तत्रापादानत्वं नाम विभागजनकतत्क्रियानाश्रयत्वे सति तत्क्रियाजन्यविभागाश्रयत्वं "ध्रुवमपायेऽपादानम्" इति सूत्रात् (अपाये) विभागजनकक्रियायां (यत् ध्रुवम्) उदासीनं

तदनाश्रय इति यावत् तदपादानमिति तदर्थः व्यक्तमुक्तं हरिणा

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते इति।

स्वयम् (चलमचलम् वा) (अतदावेशात्) विभागजनकतत्-क्रियानाश्रयत्वादेव ध्रुवमित्यर्थः। अत च तत्क्रियानाश्रय-त्वादित्युक्तेरुभयकर्म्मजविभागस्थले न कर्त्तुरपादानत्वम्। तद-प्युक्तं तेनैव

मेषयोः स्वक्रियापेक्षं कर्त्तृत्वञ्च पृथक् पृथक्।
मेषान्तरक्रियापेक्षमवधित्वं पृथक् तयोरिति।

अपादानसंज्ञावत्त्वं तत्त्वमिति तु तत्त्वम् एवं सम्प्रदानादित्वमपि। तेन "अपादाने पञ्चमीति" सूत्रादपादानसंज्ञकेभ्यः सर्व्वेभ्यएव पञ्चमीत्यवधेयम्। तच्च त्रिविधम्

निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियञ्चेति त्रिधापादानमिष्यते इति।

इत्युक्तत्रिविधभेदात्। तत्र निर्द्दिष्टोविषयः स्वशक्तिनिरू-पिका क्रिया यस्येत्याद्यं, यथा वृक्षात् पततीति। उपात्तः क्रियान्तरेण गृहीतोविषयस्तथारूपोयस्येति द्वितीयं, यथा मेघात् विद्योतते विद्युत् इत्यादौ अत्र द्युतिक्रिययैव निःसरण-रूपस्वविषयस्य ग्रहणात्। अपेक्षिता क्रिया स्वंविषयभूता येनेति तृतीयं, यथा कुतोभवानित्यादौ अत्रागमनक्रियाया अपेक्षा।

सम्प्रदानत्वं नाम क्रियाजन्यफलभागिमत्त्वेनोद्दिष्टत्वं

"कर्म्मणा यमभिप्रैति स सम्प्रदानम्" इति सूत्रात्। तच्च त्रिविधम्।

अनिराकरणात् कर्त्तुस्त्यागाङ्गकर्म्मणेप्सितम्।
प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानतामिति।

इत्युक्तदानप्रयोजकव्यापारत्रयभेदात्। तत्र त्यागाङ्गेति लक्षणपरमिति बोध्यम्। तत्राद्यं देवतादि, यथा शिवाय वस्त्रं ददाति, तस्य कर्त्तुरनिराकरणेन प्रवृत्त्यप्रतिबन्धात्। द्वितीयं याचकादि, यथा विप्राय गां ददाति, तस्य देहीत्याद्यभिलापादिना कर्त्तुः प्रेरणात्। तृतीयं गुर्व्वादि, यथा गुरवे गां ददाति, तस्य प्रार्थनाव्यतिरेकेणानुमतिमात्रेणैव प्रेरणादिति दिक्।

करणत्वं नाम अव्यवहितक्रियाजनकविवक्षितव्यापारवत्त्वं "साधकतमं करणमिति" सूत्रात् तत्र च तमप्प्रत्ययेनाव्यवहितव्यापारवत्त्वरूपप्रकर्षावबोधनात्। यथोक्तं हरिणा

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमिति।

अत्र विवक्ष्यते इत्युक्तेः कारकान्तराणामपि तथात्वमिति सूचितम्। तदप्युक्तं तेनैव

वस्तुतस्तदनिर्द्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यतइत्येष प्रयोगोदृश्यते यत इति।

(वस्तु) करणपदार्थः। अत्र अधिकरणस्य स्थाल्यादेः करणत्वविवक्षणात् करणत्वम्।

आधारत्वं नाम कर्त्तृकर्म्मव्यवहितक्रियाश्रयत्वम्

कर्त्तृकर्म्मव्यवहितामसाक्षात् धारयत् क्रियाम्।
उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति

हर्य्युक्तेः। अत्र एते कर्त्तृकर्म्मणी न क्रियां जनयतइत्यधिकरणं तदुपकारि। तत्र गृहे शेतेइत्यादौ कर्त्तृद्वारा, स्थाल्यामोदनं पचतीत्यादौ कर्म्मद्वारा, गृहादि तदुपकारकं क्रियाश्रयस्येति विशेषः। तच्च चतुर्व्विधम्।

सामीप्यश्लेषविषयैर्व्याप्याधारश्चतुर्व्विध इति

भेदकसम्बन्धचातुर्व्विध्यात्। तत्र सामीप्यसम्बन्धेनाधिकरणमाद्यं, यथा वने नदी आस्ते इत्यादौ वनादि। एकदेशसम्बन्धेन द्वितीयं, यथा कटे आस्ते इत्यादौ कटादि। विषयतासम्बन्धेन तृतीयं, यथा मोक्षे इच्छास्तीत्यादौ मोक्षादि। व्याप्तिसम्बन्धेन चतुर्थं, यथा तिलेषु तैलमस्तीत्यादौ तिलादि।

कर्म्मत्वं नाम क्रियाजन्यतद्व्यधिकरणफलवत्त्वं कर्म्मसंज्ञावत्त्वं वा। तच्च कर्म्म सप्तविधं त्रिविधमीप्सिततमं, कल्पितं चतुर्व्विधञ्चेत्यवान्तरभेदात् यथोक्तं हरिणा

निर्व्वर्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म्म, चतुर्द्धान्यत्तु कल्पितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्व्वकमिति।

तत्र निर्व्वर्त्यादित्रयाणां लक्षणादिकमपि तेनैवोक्तं यथा

यदसज्जायते सद्वा जन्मना यत् प्रकाशते।
प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा।
तन्निवर्त्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम्।

प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चित् गुणान्तराधानात् सुवर्णादिविकारवत्।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न तिष्ठति।
दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते इति।

तदयं लक्षणनिष्कर्षः। प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति क्रियाजन्योत्पत्तिरूपफलवत्त्वं निर्व्वर्त्त्यत्वम् उत्पत्तिश्चाद्यक्षणसम्बन्धरूपा प्रथमप्रकाशरूपा च यदसदित्याद्युक्तेः।

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्व्वर्त्त्यत्वं प्रचक्षते।

इत्युक्तेस्तु प्रकृतिवाचकपदासमभिव्याहृतेत्यादि। यथा घटं करोतीत्यादौ घटादि, पुत्त्रं प्रसूतइत्यादौ च पुत्त्रादिः। प्रतीयमानप्रकृतिविकृतिभावत्वे सति क्रियानिर्व्वाह्यविशिष्टासत्त्वोत्पत्तिरूपान्यतरफलवत्त्वम् विकार्य्यत्वं, यथा सुवर्णं कुण्डलं करोतीत्यादौ सुवर्णकुण्डलादि, तत्र सुवर्णस्य पूर्व्वरूपासत्त्वरूपफलवत्त्वात् कुण्डलस्योत्पत्तिरूपफलवत्त्वाच्च तथात्वम्। एवं काष्ठं भस्म करोतीत्यादावपि काष्ठभस्मादेः, तत्र च काष्ठस्य क्रियाजन्यविशिष्टासत्त्वप्रयोजकनाशवत्त्वात् तथात्वमिति विवेकः। क्रियाकृतासाधारणधर्म्मप्रकारकप्रतीतिविषयतानाश्रयत्वे सति क्रियाजन्यफलवत्त्वेनोद्देश्यत्वं प्राप्यत्वं, यथा ग्रामं गच्छतीत्यादौ ग्रामादिः, संयोगरूपफलस्य क्रियाधिकरणकर्त्तृवृत्तित्वेन साधारणात् असाधारणोत्पत्त्यादिरूपफलस्य तु तत्रासत्त्वात् तथात्वमिति। एतत्त्रितयमपीप्सिततमं कर्त्तुः क्रिया-

फलेनेष्टतमत्वात्। एतद्भिन्नं (चतुर्था कल्पितम्) पारिभाषिकमित्यर्थः। तानि च उदासीनद्वेष्याकथितान्यपूर्व्वकसंज्ञकानि तत्र कर्त्तुरनुद्देश्यत्वे सति क्रियाजन्यफलवत्त्वमुदासीनत्वं, यथा ग्रामं गच्छन् तृणं स्पृशतीत्यादौ तृणादेः, तस्योद्देश्यत्वाभावेऽपि क्रियाजन्यसंयोगवत्त्वात् तथात्वम्। द्विष्टसाधनत्वे सति क्रियाजन्यफलवत्त्वं द्वेष्यत्वं, यथा अन्नं बुभुक्षमाणो विषं भुङ्क्ते इत्यादौ विषादेः। कारकविशेषसंज्ञान्तरेणाविवक्षितत्वे सति कर्म्मोपकारकत्वमकथितत्वं यथा गां दुग्धं दोग्धीत्यादौ गवादेर्दुग्धोपयोगितयाऽविवक्षितकारकान्तरसंज्ञकत्वेन च तथात्वम्। अत्र चाविवक्षितत्वं नाम प्रसक्तावप्रसक्तौ वा तत्त्वेन विवक्षाविषयत्वाभावस्तेन केषाञ्चिद्धातूनां संज्ञान्तराप्रसक्तावपि तथात्वम्। एतत्संज्ञानियामको धातुविशेषयोग एव। तदुक्तमभियुक्तैः

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासिजिमन्थ्मुषाम्।
कर्म्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहामिति।

(कर्म्मयुक्) कर्म्मोपकारकम्। द्वैराश्येन पाठः गौणमुख्यकर्म्मणोर्लादिविशेषकार्य्यार्थंइत्याकरे स्पष्टम्। एतेषाञ्च षोड़शानां मध्ये केषाञ्चिद्धातूनां कर्म्माकाङ्क्षिद्विव्यापारार्थकतया तद्योगे ईप्सिततमत्वेनैव कर्म्मसंज्ञाप्राप्तौ प्रत्याख्यानेन एकव्यापारार्थका एव धातवो भाष्ये संगृहीता यथा

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्व्वविधौ।
ब्रुविशासिगुणेन च यत् सचते तदकीर्त्तितमाचरितं कविनेति।

अत्र चापूर्व्वविधावित्युक्तेर्दुहादीनां न तथाभूतद्विव्यापारार्थकतेत्यवसीयतेऽन्यप्राप्तत्वादपूर्व्वविधानानुपपत्तेः। एवञ्चैतेषां धातूनां कर्म्मसंज्ञाप्राप्त्यप्राप्तिव्यवस्थार्थं द्विव्यापारैकव्यापारार्थकता सिद्धान्ते स्वीकृता। तथाच षोड़शानां मध्येऽष्टानामेव भाष्योक्तानामेकव्यापारार्थकता तथाहि। अन्तःस्थितद्रवद्रव्यविभागानुकूलोव्यापारोदुहेरर्थस्तत्र विभागे गोरपादानत्वाविवक्षायां दुग्धोपयोगित्वात् कर्म्मत्वम्। स्वत्वनाशस्वत्वोत्पत्त्यनुकूलोव्यापारोदेहीत्याद्यभिलापरूपोयाचेरर्थस्तत्र कस्यापि कारकस्याप्रसक्तौ धनादिसम्बन्धितया तदुपयोगिनः कर्म्मत्वम्। निर्गमप्रतिबन्धपूर्व्वकान्तःस्थित्यनुकूलव्यापारोरुधेरर्थस्तत्र स्थित्याधारस्य तत्त्वाविवक्षायां धात्वर्थजन्यस्थितिरूपफलोपकारकत्वात् कर्म्मत्वम् फलस्यापि व्यपदेशिवद्भावपरिभाषया कर्म्मत्वस्वीकारात् फलवत्त्वेनैव कर्म्मणः कर्म्मसंज्ञाभागित्वेन फलस्यापि तथात्वौचित्यादित्याकरे स्पष्टम्। जिज्ञासाविषयार्थज्ञानानुकूलोव्यापारः प्रच्छेरर्थस्तत्र कस्याप्यप्राप्तौ ज्ञानरूपफलोपयोगित्वात् कर्म्मत्वम्। ज्ञानस्य च विषयतयैव फलत्वस्वीकारात् न प्राप्तिसम्भवः। एतच्च ज्ञानं प्रष्टुरेव न प्रष्टव्यस्य नातोपि प्राप्तिसम्भवः प्रच्छिरित्यत्रार्षस्तुगभावः। याचेरर्थपरनिर्द्देशद्योतनार्थं तत्समानार्थकभिक्षिग्रहणम्। विभागपूर्व्वकादानं चिञोर्थस्तत्र विभागेऽपादानत्वाविवक्षायां पुष्पादिकर्म्मोपकारकस्य कर्म्मत्वम्। ज्ञानानुकूलशब्दप्रयोगो ब्रुवोऽर्थः। प्रवृत्तिजनकः सएव शासेरर्थस्तत्र ज्ञानस्य विषय-

कर्त्तुः स्वातन्त्र्यमिति। पाचयतीत्यादावपि प्रयोज्यस्य पाके स्वातन्त्र्यमस्त्येव वेतनादिलाभरूपस्वार्थसिद्धय एव तस्य प्रवृत्तेः

निमित्तेभ्यः प्रवर्त्तन्ते सर्व्व एव स्वभूतये।

अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये इति

हरिणा स्वार्थसिद्ध्यर्थप्रवृत्त्यैव स्वातन्त्र्यव्यवस्थापनादित्यलम् विस्तरेण।

अथ द्वितीयादीनामर्थाः प्रदर्श्यन्ते। तत्र कारकद्वितीयायाः कर्म्मार्थः "कर्म्मणि द्वितीयेति" सूत्रात्। तस्य च कर्म्मशक्तिमत्त्वेनाश्रयत्वेन वा वाच्यत्वमन्वयस्य धात्वर्थफले स्वनिष्ठशक्तिनिरूपकतया निरूपकतया वा मतभेदेन। तेन जलधिमधिशेते इत्यादावपि तच्छक्तिमत्त्वेनैवाधारादीनां बोधः। अकर्म्मकधातूनां तु सकर्म्मकक्रियान्तर्भावेणैव तद्योगे कालादीनां कर्म्मत्वं यथोक्तं हरिणा

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।

सर्व्वैरकर्म्मकैर्योगे कर्म्मत्वमुपजायते इति।

एतच्च मासमास्ते इत्यादौ धातोरेव सम्बन्धपूर्व्वकासनादौ, आसनादिकरणकसम्बन्धे वा लक्षणायानिरूढ़त्वज्ञापकम्। ततश्च सम्बन्धस्य कर्म्माकाङ्क्षितया कालादेस्तत्रान्वयात् कर्म्मत्वम्। अत्रायं विशेषः धातोराद्यार्थलक्षणायां प्रधानक्रियाया अकर्म्मकत्वात् दुहादिपाठाभावाच्च गौणकर्म्मणि लकारासम्भवेन भावएव लकारस्तेन मासमास्यते इत्येव प्रयोगः। द्वितीयार्थलक्षणायान्तु

प्रधानक्रियायाः सकर्म्मकतया कालादेश्च तत्कर्म्मत्वेन मुख्य-कर्म्मतया कर्म्मण्येव लकारस्तेन मास आस्यते इति प्रयोगः यथोक्तं हरिणा

अतस्तैः कर्म्मभिर्युक्तो धातुर्द्रव्यैरकर्म्मकः।

लस्य कर्म्मणि भावे च निमित्तत्वाय कल्पते इति

अत्र लस्येत्युक्तेः कृद्योगे न तेभ्यः षष्ठीति मनोरमायां स्पष्टम्। तथा "कालादिकर्म्मका अकर्म्मका भवन्तीति" भाष्योक्तेश्च गतिबुद्धीत्यादिसूत्रेऽकर्म्मकतया तेषां प्रयोज्यस्य कर्म्मत्व-मेवमन्यदपि कार्य्यमित्याकरे स्पष्टम्।

"कालाध्वनोरत्यन्तसंयोगे" इति, विहितद्वितीयाया व्याप्तिरर्थः सा च प्रत्यासत्त्या कालादिनिरूपिता द्रव्यगुण-क्रियादिनिष्ठा। तेन क्रोशं कुटिला नदी, मासमधीते इत्यादौ गुणक्रियादिषु व्याप्तिबोधः।

"कर्म्मप्रवचनीययुक्ते" इति विहितायास्तु सम्बन्धसामान्य-मर्थः शेषषष्ठ्यपवादत्वेन तस्यास्तत्तुल्यार्थकतौचित्यात् एवञ्चान्वा-दीनां ज्ञाप्यत्वादिविशेषसम्बन्धकथनाय "अनुर्लक्षणे" इत्यादि-सूत्रजातमारब्धम् विशेषानभिधाने सामान्यसम्बन्धस्यापि तात्-पर्य्यवशात् विशेषे पर्य्यवसानम्। कर्म्मप्रवचनीयानान्तु द्वितीयाद्यर्थसम्बन्धद्योतकतामात्रम्। यथोक्तं हरिणा

क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः।

नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति।

द्वितीयादिनैवोक्तत्वात् न सम्बन्धस्य वाचकइत्यर्थः (भेदकः)

द्योतकः। अत्र सम्बन्धस्येति सामान्यतोनिर्द्देशात् क्रियासम्बन्ध-वद्द्रव्यादिसम्बन्धस्यापि तेषां द्योतकता अतएव कर्म्मप्रवच-नीयेत्यन्वर्थसंज्ञा कर्म्म क्रियां तत्सम्बन्धं वा प्रोक्तवानिति भूते कर्त्तरि चानीयर्प्रत्ययाश्रयणात्। अन्वादयो हि प्रायशः क्रियासम्बन्धद्योतका अपि क्वचिद्द्रव्यादिसम्बन्धद्योतका अपि भवन्ति यथा वनमनु नदीत्यादौ। तेषाञ्च द्योत्याः सम्बन्ध-विशेषाः सूत्रानुसारेण कतिचित् प्राचीनैर्द्दर्शिता यथा

वीप्सेत्यम्भावचिह्नेऽभिस्तेषु भागे परिप्रती।

अनुस्तेषु सहार्थे च हीनेऽनूपौ मताविहेति।

तत्र वीप्सा व्याप्तिः यथा वृक्षं वृक्षमभि सिञ्चतीत्यादौ तत्रापि "नित्यवीप्सयोरिति द्विर्भूतप्रकृत्या व्याप्यत्वं द्योत्यते तच्चाभि-द्योत्ये द्वितीयार्थव्यापकत्वेऽन्वेतीति न तद्वैयर्थ्यमतएव तस्य न संसर्गविधयान्वय इति विवेकः। वृक्षादेश्च सेकादिकर्मत्वेऽपि विवक्षयैव व्यापकत्वेऽन्वय इत्याकरे स्पष्टम्। तेन वृक्षवृत्ति-व्याप्यतानिरूपकव्यापकतावान् सेक इति बोधः। इत्थम् अनिर्द्धारितकिञ्चिद्धर्मस्य भावः प्राप्तिः वैशिष्ट्यमिति यावत् तदीयसम्बन्धः द्वितीयार्थोऽभिना द्योत्यते यथा विभुमभि भक्त इत्यादौ विभुसम्बन्धिभक्तिमानिति बोधः। चिह्नं लक्षणं ज्ञाप्य-त्वमिति यावत् यथा कारिरीमनु वर्षतीत्यादौ बोधस्तु कारि-रीज्ञाप्यं वर्षणमिति। एवमन्येषामप्यर्थान्वयादिकमूह्यम्।

केषाञ्चिद्वाचकधिगाद्यव्ययानां योगेऽपि द्वितीयानुशिष्यते यथा।

उभसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु।
द्वितीयाम्रेड़ितान्तेषु तथान्यत्रापि दृश्यतेइति।

तत्र द्वितीयार्थः सम्बन्धः धिगाद्यर्थनिन्दादावन्वयी, तेन नास्तिकं धिगित्यादौ नास्तिकसम्बन्धिनो निन्देति बोधः। (आम्रेड़ितान्तेषु) द्विरुक्तेष्वित्यर्थः अत्रान्यत्रापीत्युक्तेः यावच्छब्दयोगेऽपि द्वितीयेति वृद्धास्तेन "आरभ्य तस्यां दशमीञ्च यावत् प्रपूजयेदिति" नदीं यावदिदं वनमित्यादि च सिद्धम्। तत्र यावच्छब्दार्थो व्याप्तिः द्वितीयार्थः सम्बन्धः तत्प्रकृतेश्च तत्प्रागभावसमीपादौ लक्षणा तेन दशमीप्रागभावव्यापकं पूजनमिति नदीसमीपव्यापकं वनमिति च बोधः। एवमन्तरादीनां योगे विहिताया अर्थान्वयादिकमूह्यं विस्तरभयान्निरतमस्माभिः।

कारकतृतीयायाः कर्त्ता करणञ्चार्थः "कर्त्तृकरणयोस्तृतीयेति" सूत्रात् तयोर्व्वाच्यतान्वयादिकमुक्तवत्। एते च व्यापारान्वयिनी। एतयोश्चान्यतरबोधनियामिका विवक्षैव एकस्योभयशक्तिमत्त्वे पर्य्यायेणोभयबोधः यथोक्तं हरिणा।

एकस्य बुद्ध्यवस्थाभिर्भेदेन परिकल्पने।
कर्मत्वं करणत्वञ्च कर्त्तृत्वञ्चोपजायते इति

बुद्ध्यवस्थाभिरित्यनेन विवक्षा द्योत्यते। "गम्यमानापि क्रिया विभक्तिप्रयोजिके"त्युक्तेः अलमलमित्यादौ तृतीया, साध्यादिपदाध्याहाराच्च अमसाध्यं नास्तीति बोधः।

"हेता"विति विहितायास्तु हेतुरर्थः। हेतुत्वञ्चात्र क्रिया-जनकव्यापारवद्भिन्नत्वे सति प्रयोजकत्वं यथोक्तं हरिणा

अनाश्रिते तु व्यापारे कारणं हेतुरिष्यते।

द्रव्यादिविषयो हेतुः करणं नियतक्रियम् इति

यथा पुण्येन सुखम्, धर्मेण धनं प्राप्नोतीति वा। व्यापारश्च साक्षात् क्रियाजनको ग्राह्यस्तेन हस्तेन दात्रेण लुनातीत्यादौ व्यवहितव्यापारवति हस्तादौ हेतुत्वमव्याहतमेव तस्य च द्रव्यत्वान्न तद्वाचकपदात् पञ्चमी "विभाषा गुणहेतावस्त्रिया-मिति" सूत्रेण गुणहेतावेव पञ्चमीविधानात् वह्निमान् धूमा-दित्यादौ ष्टप्रयोगसिद्ध्यर्थं तत्र योगविभागाश्रयणेऽपि अत्रा-नभिधानान्न तदादरणेन पञ्चमी।

धूमपदस्य धूमज्ञानादौ लक्षणायान्तु न तत्रापि योग-विभागाश्रयणमित्याकरे स्पष्टम्। प्रयोजकत्वमित्युक्तेऽध्ययनेन वसतीति सिद्धमध्ययनरूपप्रयोजनस्यापि वासेच्छाप्रयोजके-च्छाविषयतया प्रयोजकत्वस्वीकारात्।

"सहयुक्तेऽप्रधाने" इति विहितायाः सहार्थतत्तत्क्रिया-कर्तृत्वादिकमर्थः सहार्थस्तु समभिव्याहृततत्तत्क्रियासमान-कालीनत्वं तत्र च क्रियायां तृतीयार्थान्वयः सहार्थस्य च धातूपात्तक्रियायामन्वयस्तेन पुत्रेण सहागतः पितेत्यादौ पुत्र-कर्तृकागमनसमानकालीनागमनकर्त्तृभिन्नः पितेति बोधः सहार्थगम्यतायां तु सहपदाध्याहारात् धातोर्वा तत्तत्क्रिया-कालीनक्रियायां लक्षणयान्वयबोधादिः। अत्राप्रधानपदम-

प्रधानक्रियान्वयिपरं तेन धातूपात्तप्रधानक्रियान्वयिपदात् न तृतीयाप्रसङ्गः ।

"येनाङ्गविकार" इति विहितायास्तु प्रयोज्यत्वमर्थः । अन्वयश्च तस्य समभिव्याहृतपदार्थैकदेशे तेन अक्ष्णा काण इत्यादौ अक्षिप्रयुक्तकाणत्ववानिति बोधः ।

"इत्थम्भूतलक्षणे" इति विहितायास्तु ज्ञाप्यत्वमर्थोऽन्वयस्तु पूर्ववत्तेन जटाभिस्तापस इत्यादौ जटाज्ञाप्यतापसत्ववानिति बोधः ।

"प्रकृत्यादिभ्य उपसंख्यान"मिति विहितायाः सम्बन्ध-सामान्यमर्थस्तात्पर्य्यवशात् विशेषावधृतिरन्वयश्च । प्रकृतिश्च यावदाश्रयभावी धर्मविशेषः । आदिपदमाकृतिगणसूचनार्थं तेन प्रकृत्या चारुरित्यादौ प्रकृत्यभिन्नचारुत्ववानिति बोधः । प्रायेण याज्ञिक इत्यादौ सम्भावनाविषययाज्ञिकत्ववानिति बोधः । प्रायार्थः सम्भावना । नाम्ना सुतीक्ष्ण इत्यादौ नामा-भेदवान् सुतीक्ष्ण इति बोधः शब्दार्थयोरारोपिताभेदसत्त्वा-न्नायोग्यता । सुरथो नाम राजेत्यादौ तु अभेदसम्बन्धेन नाम्नः सुरथादावन्वयात् न तृतीया । अभेदप्रकारकबोध-विवक्षायामेव तृतीयेति विवेकः । घटत्वेन जन्यत्वमि-त्यादौ घटत्वावच्छेद्यं जन्यत्वमिति बोधः । एवमन्येऽपि प्रयो-गास्तत्तत्सम्बन्धरूपतृतीयार्थताविवक्षायामेवोन्नेया इति दिक् ।

कारकचतुर्थ्याः सम्प्रदानमर्थः "चतुर्थी सम्प्रदाने" इति सूत्रात् वाच्यतादि पूर्ववत् । विप्राय गां ददातीत्यादौ विप्रसम्प्रदानक-

गोकर्म्मकदानमिति बोधः मूल्याग्रहणपूर्ब्बकस्वत्वनाशपूर्ब्बक-स्वत्वोत्पत्त्यनुकूलव्यापारो ददातेर्मुख्यार्थः तदुद्देश्यस्य मुख्यसम्प्र-दानत्वम्। शिष्याय चपेटं ददातीत्यादौ तु संयोगानुकूलव्यापा-रानुकूलव्यापारार्थकतया ददातेर्गौणत्वात् तदुद्देश्यस्य गौण-सम्प्रदानत्वमतएव वार्त्तिके "क्रियया यमभिप्रैतीति" क्रियो-द्देश्यस्यैव सम्प्रदानत्वमुक्तम्। एवञ्च रजकाय वस्त्रं ददाती-त्यपि साधु। आयत्तीकरणरूपददात्यर्थोद्देश्यत्वविवक्षायां तु षष्ठीप्रयोग इति भाष्यसम्मतम्। एतेन पितृभ्योऽन्नं दद्यादि त्यादौ पित्रादेरन्नादिमत्त्वेनोद्देश्यत्वाभावेऽपि दानक्रियोद्दे श्यत्वात् सम्प्रदानत्वम्। एवं पत्ये शेते इत्यादावपि। बोधस्तु सर्व्वत्र तत्तत्सम्प्रदानिका क्रियेति तेन न तादर्थ्यचतुर्थ्या अस्यागतार्थत्वमिति बोध्यम्।

हरये रोचते भक्तिरित्यादौ विषयतया प्रीत्यनुकूलस्तत्-समानाधिकरणव्यापारो रुच्यर्थः समवायेन तत्फलाश्रयः सम्प्रदानं "रुच्यर्थानां प्रीयमाणः" इति सूत्रात्। बोधस्तु भक्ति-कर्त्तृको हरिसम्प्रदानकस्तादृशव्यापार इति। अभिलष्यतेस्तु विषयतया प्रीतिव्यधिकरणव्यापारबोधकतया सकर्म्मकत्वेन न रुच्यर्थत्वमतस्तत्र भक्तिमभिलष्यति हरिरित्येव प्रयोगः।

बोधविषयगुणवत्त्वप्रतिपादकशब्दप्रयोगः श्लाघतेरर्थः। बोधविषयद्रुतरादर्शनयोग्यदेशस्थापनं ह्नुतेः। तिष्ठतेः स्वाभि-प्रायबोधनानुकूलस्थितिः। शपतेः स्वाभिप्रायबोधनानुकूल-शपथकरणमर्थः। तत्र बोधयितुमिष्टः सम्प्रदानं "श्लाघह्नुस्था-

शपां ज्ञीप्समान" इति सूत्रात्। अवस्थित्यनुकूलव्यापारोधारे-
रर्थः। स्थित्याश्रयसम्बन्धी सम्प्रदानं "धारेरुत्तमर्ण" इति
सूत्रात्। अवश्यदेयमृणमुत्तममुद्दिश्यत्वेन देयं तद्यस्येति
व्युपत्त्या स्थितवस्त्ववश्यदानोद्दिश्य उत्तमर्ण इति फलितार्थः।
इच्छामात्रं स्पृहयतेरर्थस्तद्विषयः सम्प्रदानं "स्पृहेरीप्सित"
इति सूत्रात्। इच्छानुकूलमनःसंयोगादिव्यापारार्थकत्वे तु
सकर्म्मकतया तद्योगे द्वितीयैव तेन पुष्पाणि स्पृहयतीत्येव
साधु। बधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः क्रुधेरर्थः।
दुःखजनकक्रियारूपापकारजन्यश्चित्तवृत्तिविशेषः द्रुहेः। उत्-
कर्षविरोधिकर्म्मारोपानुकूलः सएव ईर्ष्यतेः। आचारादि-
गुणविशेषे दम्भकृतत्वाद्यारोपानुकूलः सएव असूयतेरर्थः।
धात्वर्थतन्मूलीभूतकोपविषयः सम्प्रदानम् "क्रुधद्रुहेर्ष्यासूया-
र्थानां यं प्रति कोपः" इति सूत्रात्। तत्र द्रोहादीनां कोपमूल-
कत्वात् तद्विषयस्य सम्प्रदानत्वमिति बोध्यम्।

प्रश्नविषयशुभाशुभपर्य्यालोचनं राधीक्ष्योरर्थः ताद्दश-
शुभाशुभसम्बन्धी सम्प्रदानम्। "राधीक्ष्योर्य्यस्य विप्रश्न" इति
सूत्रात्। प्रवर्त्तनाजन्योऽभ्युपगमः प्रतिश्रुव आश्रुवश्चार्थः
प्रवर्त्तनाकर्त्ता सम्प्रदानं "प्रत्याङ्भ्यां श्रुवः पूर्ब्बस्य कर्त्ता" इति
सूत्रात्। (पूर्ब्बस्य) धात्वर्थघटकविशेषणव्यापारस्य। शंसनवि-
षयहर्षानुकूलव्यापाररूपप्रोत्साहनं प्रतिगृणातेरनुगृणातेश्चार्थः
अत्रापि पूर्ब्बव्यापारस्य शंसनस्य कर्त्ता सम्प्रदानम् "अनुप्रति-
गृणश्चेति" सूत्रात्। सर्व्वत्र च यथायथं हेतुत्वकर्म्मत्वादिना

सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्ब्बकः।
अश्रुतायां श्रुतायां वा क्रियायामभिधीयतेइति।

तत्र राज्ञः पुरुष इत्यादौ अश्रुताया अपि दानप्रतिग्रहादि-क्रियायाः कर्त्तृत्वेनोपकार्य्योपकारकभावोऽवगम्यते मातुः स्मर्य्यते इत्यादौ पुनः श्रुतायाः स्मरणादिक्रियायाः कर्म्मत्वेन तथाभाव इति विशेषः। सामीप्यसम्बन्धेऽपि समीपदेशस्थित्यादिकर्त्तृत्वे-नैव तथाभाव इत्याकरे स्पष्टम्। तत्राप्ययं विशेषः सम्बन्धस्य द्विष्ठत्वेऽपि गुणीभूतसम्बन्धिनएव षष्ठी यथोक्तं हरिणा

द्विष्ठोऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानस्र प्रधानेऽप्युपचर्य्यते इति।

अयमप्यपरो विशेषः। सर्व्वेषां धातूनां योगे शेषत्वेन विव-क्षायां कर्म्मादौ षष्ठीप्राप्तावपि "ज्ञोऽविदर्थस्य करणे" इति अधीगर्थदयेशां कर्मणीत्यादिसप्तसूत्र्यां शेषे इत्यनुवृत्त्या शेषत्वेन विवक्षिते एव कर्म्मकरणादौ ज्ञादिविशेषयोगे षष्ठीविधानं समासनिषेधार्थं तेन सर्पिषो ज्ञानं मातुः स्मरणमित्येव प्रयोगः। यथोक्तं वार्त्तिके "प्रतिपदविहिता षष्ठी न सम-स्यते" इति। हरिणाप्युक्तम्

कारकव्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये इति।

अत्र कारकव्यपदिष्ट इत्युक्तिः सम्बन्धे क्रियाकारकभावमूल-कत्वद्योतनार्थम्। प्रतिपदं सकलप्रत्ययप्रयोगे, न तु कृद्विशेष-योगएवेत्यर्थः। हरिस्मृतिरित्यादौ च हरेः शेषत्वेनाविवक्षायां

र्म्मतया विवक्षायां च कृद्योगे कर्मार्थषष्ठ्या समासः स्वरे
लक्षणाच्च न नियमवैयर्थ्यमिति दिक्।

"कर्त्तृकर्मणोः कृतीति" विहितायाः कर्त्ता कर्म चार्थः।
एकत्रोभयप्राप्तौ षष्ठ्याः साधुत्वे नियमोऽप्युक्तः। यथा

षष्ठी सम्भाविता यत्र युगपत् कर्त्तृकर्मणोः।
अस्त्रीविहितकृद्योगे कर्मणि स्यान्न कर्त्तरि।
तव्यादीनां प्रयोगे च द्वयोरेव हि नेष्यते।
कर्त्तुर्व्विभाषया केचित् कर्मणोऽपि तथेष्यते इति

तथा गुणमुख्यकर्मणोरपि विशेष उक्तः।

प्रधाने नियता षष्ठी गुणे तूभयथा भवेत्।
प्रधाने प्रत्ययाश्चेत् स्युः षष्ठीं कुर्य्यात्तदा गुणे। इति

अत्राप्ययं विशेषः। नलोके त्यादिना कृद्योगे षष्ठीनिषेधात्
शेषषष्ठ्यापि न तत्र समासस्तेन ग्रामस्य गतवानिति विग्रहेऽपि
ग्रामगतवानिति न प्रयोगः। यथोक्तं हरिणा

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समास स्तत्र नेष्यते इति।

अत्र निष्ठायामित्युपलक्षणमित्याकरे स्पष्टम्।

सप्तम्या अधिकरणमर्थः "सप्तम्यधिकरणे" इति सूत्रात्।
वाच्यता तु तच्छक्तिमत्त्वेन तस्य च स्वाश्रितकर्त्तृकर्मान्यतर-
निष्ठाधारतानिरूकतया फलव्यापारान्यतरयोरन्वयः।

"यस्य च भावेन भावलक्षण"मिति विहितसप्तम्याः समान-

देशकालत्वाभ्यां परिच्छेदकत्वरूपलक्षणमर्थः तत्र द्रव्यस्य स्वतः कालादिपरिच्छेदकत्वाभावेन तद्गतक्रियाया एव परिच्छेदकत्व-कथनाय यस्य च भावेनेत्युक्तं भावस्यापि स्वतस्तथात्वाभावेन तद्देशकालयोस्तथात्वेनैव च परिच्छेदकत्वम्। तेन गोषु दुह्य-मानास्वागत इत्यादौ गवादिदोहक्रियाकालेनागमनकालपरि-च्छेदात् गवादेः सप्तमी बोधस्तु दोहनकर्म्माभिन्नगव्यादिसम्बन्धि-दोहनक्रियाकालीनागमनकर्त्तेति। तत्र यस्य चेति चकारात् तद्विशेषणवाचकादपि सप्तमी। यस्येत्युक्त्या कर्त्तृककर्मणोरेव फलव्यापररूपक्रियाश्रयतया तद्भावेन क्रियान्तरकालपरिच्छेद-कत्वविवक्षायां ताभ्यामेव सप्तमी न कारकान्तरेभ्यइत्याकरे स्पष्टम्। गुणे सति द्रव्यत्वमस्तीत्यादौ गुणसत्तायाः द्रव्यत्वसत्त्वा-धिकरणदेशपरिच्छेदकत्वात् गुणवाचकात् सप्तमीति बोध्यम्। बोधस्तु सत्तावदभिन्नगुणसम्बन्धिसत्तासमानदेशिकं द्रव्यत्वकर्त्तृक-मस्तित्वमिति। प्रसिद्धञ्च निर्ज्ञातदेशकालक्रियाया अनिर्ज्ञात-देशकालयोः परिच्छेदकत्वं, तस्याश्च कदाचित् स्वसमानकालेन कदाचिच्च स्वपूर्व्वोत्तरकालाभ्यां तथात्वं तेन दुग्धासु धोक्ष्य-माणासु वा गोष्वागतइत्यादिसिद्धिः। "तथा यस्य च भावे-नेति" प्रागुक्तेरेतत्सप्तम्याः क्रियायामेव साधुत्वाद्यत्र तद्वा-चकं पदं नास्ति तत्राध्याहृतक्रियायामन्वयस्तेन गुणकर्म्मान्यत्वे सति सत्त्वादित्याद्युपपत्तिरिति दिक्।

"निमित्तात् कर्मयोगे इति विहितसप्तम्याः निमित्तत्वमर्थः निमित्तत्वमुद्देश्यत्वं फलत्वमिति यावत् चर्मणि द्वीपिनं हन्ती-

त्यादौ चर्मोद्देश्यकं द्वीपिहननमिति बोधः। योगश्चेह संयोग-समवायाभ्यामेवेत्याकरे स्पष्टम्।

"षष्ठी चानादरे" इति विहितषष्ठीसप्तम्योः कर्मार्थः, तत्-समभिहारे च अनादरपूर्व्वकतत्तत्क्रियायां धातोर्लक्षणा तत्रानादरे च कर्मान्वयस्तेन रुदति अपत्ये रुदतो वा जगामे-त्यादौ रोदनकर्तृपत्यकर्म्मकानादरपूर्व्वकं गमनमिति बोधः। साधुनिपुणादियोगे विहितयोस्तयोः सम्बन्धसामान्यमर्थः।

"यतश्च निर्द्धारणमिति" विहितयोस्तयोर्निर्धार्य्यधर्मतदव-ध्योरवधित्वाख्यः सम्बन्धोऽर्थः सजातीयसमुदायाद् यतएकदेशस्य जात्यादिरूपव्यावर्त्त्यधर्मद्वारा (निर्द्धारणं) तद्धर्मप्रकारकज्ञान-विषयीकरणं ततः षष्ठीसप्तम्यौ स्त इति सूत्रार्थः। तेन नराणां नृषु वा विप्रः श्रेष्ठइत्यादौ नरपदं विप्रादीतरनरबोधकं धस्तु विप्रादीतरनरावधिकव्यावर्त्त्यश्रेष्ठत्वगुणवदभिन्नोविप्र-इति। निर्द्धारणापेक्षयाऽवधित्वविवक्षायां पञ्चम्यपि साधुः "पञ्चमी विभक्ते" इतिसूत्रात् निर्धार्य्यनिर्द्धारणयोरत्यन्तभेद-एव अस्याः साधुत्वम्। भवति च माथुराः पाटलिपुत्रेभ्य आढ्य-तरा इत्यादौ माथुरपाटलिपुत्रवासिनोरत्यन्तभेद इति। अत-स्तत्र तत्तत्पदार्थभेदघटित निर्द्धार्य्यसम्बन्धएव तयोरर्थ इति दिक्। शुभम्

इति शब्दार्थरत्ने षष्ठकाण्डं समाप्तम्।

---

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्येण विरचितं
शब्दार्थरत्नं समाप्तम्।

शाके वेदाङ्कबाहेन्दुमाने द्व्यधशते रवौ।
शब्दार्थरत्नं भूयोऽदो मुद्रितं नागराक्षरैः॥

## THE FOLLOWING IS THE LIST OF

### PROFESSOR TARKAVACHASPATI'S

## WORKS & PUBLICATIONS.

| No. | Title | Rs | As |
|---|---|---|---|
| 1. | Asubodham Vyakaranam. ... ... | 3 | 4 |
| 2. | Dhaturupadarsha. ... ... ... | 2 | „ |
| 3. | Sabdastoma Mahanidhi. ... ... | 10 | „ |
| 4. | Sidhantakoumudi with Sarala ... ... | 11 | „ |
| 5. | Sidhantavindusara. ... ... ... | „ | 8 |
| 6. | Tuladanadipadhati. ... ... ... | 4 | „ |
| 7. | Gaya Shradhadipadhati. .. ... | 1 | „ |
| 8. | Sabdartharatna. ... ... .. | „ | 12 |
| 9. | Vakyamanjari. ... ... ... | „ | 4 |
| 10. | Vrittaratnakara and Chhandomanjari with notes. | „ | 10 |
| 11. | Venisanhara with a Commentary. .. | 1 | „ |
| 12. | Mudarrakshasa. Ditto ... ... | 1 | 8 |
| 13. | Ratnavali Ditto ... ... | 1 | 8 |
| 14. | Malavikagnimitra. Ditto ... ... | 1 | 8 |
| 15. | Dhananjayavijaya. Ditto ... ... | „ | 4 |
| 16. | Mahaviracharita. Ditto ... ... | 1 | 8 |
| 17. | Sankhyatatwakoumudi. Ditto ... ... | 2 | 8 |
| 18. | Veiyakarana Bhusanasara. ... ... | 2 | „ |
| 19. | Lilavati.... ... ... ... | „ | 12 |
| 20. | Vijaganita. ... ... ... | 1 | „ |
| 21. | Sishupalabadha with Mallinatha. ... | 6 | „ |
| 22. | Kiratarjuniya. Ditto ... ... | 2 | 8 |
| 23. | Kumarasambhava Purvakhandam. Ditto ... | 1 | „ |
| 24. | Kumarasambhava Uttarakhandam. ... | „ | 8 |
| 25. | Panini Sutras. ... ... ... | „ | 12 |
| 26. | A comprehensive Sanscrit Dictionary ( In the Press ) | 60 | „ |
| 27. | Kadambari with a commentary. ... | 4 | „ |

# वैया० [illegible] णसारः ।

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्त्तते ॥
अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥
पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधम्
द्वैतध्वान्तनिवारणादिपुलिकां पुंभाववाग्देवताम् ।
दुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥

प्रारिप्सितप्रतिबन्धकव्यूहोपशमनाय कृतं श्रीपतञ्जलिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते ।

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।
तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥ १ ॥

उद्धृत इत्यत्र अस्माभिरिति शेषः । भाष्याब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय । अन्यथा तन्मूलकस्यास्य ग्रन्थ-

स्याप्याधुनिकोत्प्रेक्षितसारल्यापत्तौ पाणिनीयानामनुपादेयतापत्तेः । तत्र निर्णीतद्युक्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥ १ ॥

प्रतिज्ञातमाह ।

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**

**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥**

धातुरित्यत्र स्मृतइति वचनविपरिणामेनान्वयः । फलं विक्लित्त्यादि, व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया । उक्तञ्च वाक्यपदीये ।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।

आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते इति ॥

नच साध्यत्वेनाभिधाने मानाभावः,पचति, पाकः, करोति, कृतिरित्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वम् तद्रूपवत्त्वमसत्वभूतत्वम् एतदेवादाय ।

असत्वभूतोभावश्च तिङ्पदैरभिधीयत ।

इति वाक्यपदीयमिति द्रष्टव्यम् । अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः । पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात् । नच नानार्थतापत्तिः, तदादिन्यायेन बुद्धिविशेषादिः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात् । आख्याते क्रियैकत्वव्यवस्थापि अवच्छे-

दर्कबुद्धिविशेषैश्यमादायैव। उक्तञ्च वाक्यपदीये।

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।

बुद्धा प्रकल्पिताभेदः क्रियेति व्यपदिश्यतइति॥

धात्वर्थं निरूप्य तिङर्थमाह(आश्रये त्विति)। फलाश्रये व्यापाराश्रये चेत्यर्थः। फलाश्रयः कर्म्म, व्यापाराश्रयः कर्त्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिरन्यलभ्यत्वात्। शक्यतावच्छेदकं चाश्रयत्वं तत्तच्छक्ति विशेषरूपमिति सुबर्थनिर्णये वच्यते। नन्वनयोराख्याताथत्वे किं मानम् प्रतीतेर्लक्षणया, आक्षेपात् प्रथमान्तपदाद्वा सम्भवादिति चेत् अत्रोच्यते।

"लः कर्म्मणि च भावे चाकर्म्मकेभ्यइति"।

सूत्रमेव मानम्। अत्र हि चकारात्"कर्त्तरि कृदिति" सूत्रोक्तं कर्त्तरीत्यनुकृष्यते बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्म्मणि कर्त्तरि चानेन विधीयन्ते नकारविसर्गादिनिष्ठां कर्म्मकरणादिबोधकशक्तिमादाय शसादिविधानवत्। नच सूत्रे कर्तृकर्म्मपदे कर्तृत्वकर्म्मत्वपरे तथा च कर्तृत्वं कृतिः, कर्म्मत्वञ्च फलमेवार्थोऽस्त्विति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात्। अथ दर्शनान्तरीयरीत्याव्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्तर्हि कृतामपि कर्तृकर्म्मादिवाचित्वं न सिध्येत्। "कर्त्तरि कृदिति" च,"लः कर्म्मणी" त्यनेन तुल्ययोगक्षेमम्।

अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचित्व-
मस्तु भावनायाएवाक्षेपेण कृदादिवत्प्रतीतिसम्भवे वाच्यत्वं
मास्तु । तथा सति प्राधान्यं तस्या न स्यादिति चेन्न घट-
मानयेत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः । पचती-
त्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति
चेत् पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाविशे-
षात् । नच कर्तुर्विवरणं तात्पर्य्यार्थविवरणं पाकं करोती-
त्यशब्दार्थकर्मत्वविवरणवत् इतरेतरद्वन्द्वे समुच्चयांशविवरण
वद्वा न तदर्थनिर्णायकमिति वाच्यम् भावनायामपि तुल्यत्वात् ।
किञ्च पचति देवदत्त इत्यत्राभेदान्वयदर्शनात् तदनुरोधे न
कर्त्तुर्वाच्यत्वमावश्यकम् पक्ता देवदत्तइतिवत् । न चाभेद-
बोधे समानविभक्तिकत्वं नियामकम् तच्च तत्र नास्तीति
वाच्यम् सोमेन यजेत स्तोकं,पचति,राजपुरुषइत्यादावप्यभेद-
बोधानापत्तेः । नच लक्षणया कर्त्तुरुक्तत्वात् सामानाधिकर-
ण्यं" पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वानापत्तेः । एवं
वैश्वदेवीत्यादितद्धितानामपि । "अनेकमन्यपदार्थे" "सास्य
देवते" त्यनुशासनेन,पिङ्गे अक्षिणी यस्याः, विश्वे देवा देवता
अस्या इति विग्रहदर्शनात्प्रधानषष्ठ्यर्थे एव अनुशासन-
लाभात् । तथा च "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं
क्रीणातीति" वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्य
एवान्वयप्रतिपादकारुणाधिकरणोच्छेदापत्तिः । द्रव्यवाचक-
त्वसाधकमूलयुक्तेः सामानाधिकरण्यस्य क्ततोऽप्युपपत्तेरिति

प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे । (तिङः) इति बोधकतारूपा शक्तिस्तिङ्ष्वेवेत्यभिप्रेत्येदम् । पदार्थं निरूप्य वाक्यार्थं निरूपयति (फले) इत्यादि । विक्लित्त्यादि फलं प्रति (तिङर्थ.) कर्तृकर्म्मसंख्याकालाः । तत्र कर्तृकर्म्मणी फलव्यापारयोर्व्विशेषणे, संख्या कर्तृप्रत्यये कर्त्तरि, कर्म्मप्रत्यये कर्म्मणि, समानप्रत्ययोपात्तत्वात् । तथाचाख्यातार्थसंख्याप्रकारकबोधं प्रत्याख्यातजन्यकर्तृकर्म्मोपस्थितिर्हेतुरिति कार्य्यकारणभावः फलितः । नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थे एवान्वयादाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावोवाच्यः सोपि चन्द्रइव मुखं दृश्यते, देवदत्तोभुक्त्वा व्रजतीत्यादौ चन्द्रक्त्वार्थयोः आख्यातार्थानन्वयादितराविशेषणत्वघटित इत्यतिगौरवम् । इदमपि कर्तृकर्म्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे । कालस्तु व्यापारे विशेषणम् । तथा हि "वर्त्तमाने लट्" इत्यत्राधिकाराद्धातोरिति लब्धम् तच्च धात्वर्थं वदत्प्राधान्याद्व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः । नच संख्यावत्कर्तृकर्म्मणोरेवान्वयः शङ्क्यः, अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च । नापि फले तदन्वयः फलानुत्पत्तिदशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्चेत्यवधेयम् । न चासवातजडीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः, परयत्नस्याज्ञानादप्रयो-

गात्। किञ्चिच्चेष्टादिनावगतौ चायमुत्तिष्ठति शक्त्यभावात् फलन्तु न जायतइति लोकप्रतीतेरिष्टत्वात्। एवञ्च तिङर्थो विशेषणमेव भावनैव प्रधानम्। 'यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं,तथापि"भावप्रधानमाख्यातं सत्वप्रधानानि नामानीति" निरुक्ताङ्गुवादिसूत्रादिस्थक्रिया प्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते। अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः समसमभेदान्वयात्प्रथमान्तस्य प्राधान्यापत्तिः। तथा च पश्य मृगोधावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात् प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः। न चैवम् प्रथमासामानाधिकरण्यात् मन्त प्रसङ्गः। एवमपि द्वितीयायादुर्व्वारत्वेन पश्य मृगइत्यादिवाक्यस्यैवासम्भवापत्तेः। नच पश्येत्यत्र तमिति कर्म्माध्याहार्य्यम् वाक्यभेदप्रसङ्गात् उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्म्मतयान्वयस्य प्रतिपिपादयिषितत्वात् अध्याहारे अनन्वयापत्तेश्च। एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्य्यकारणभावोद्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः। पश्य मृगोधावति, पचति भवतीत्याद्यनुरोधादिति दिक्। इत्थञ्च पचतीत्यत्रैकाश्रयिका

पाकानुकूला भावना, पच्यते इत्यत्रैकाश्रयिका या विक्लित्ति-स्तदनुकूला भावनेति बोधः । देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः। घटोनश्यतीत्यत्रापि घटाभिन्नाश्रयकोनाशानुकूलोव्यापारइति बोधः । सच व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसन्नवधानम् । अतएव तस्यां सत्यां नश्यति, तदत्यये नष्टः,तद्भाविस्वे नङ्क्ष्यतीति प्रयोगः । देवदत्तोजानातीच्छतीत्यादौ च देवदत्ताभिन्नाश्रयकोज्ञानेच्छाद्यनुकूलोवर्त्तमानो व्यापारइति बोधः स चान्तत आश्रयतैवेति रीत्योह्यम् ॥ २॥

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे पचतीत्यत्रोभयबोधापत्तिः कर्तृमात्रबोधवत् कर्ममात्रस्यापि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह ।

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ।**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम् ॥३॥**

तङादयः फले आश्रयान्वयं द्योतयन्ति फलान्वयाश्रयस्य कर्मत्वात्तद्योतकाः कर्मद्योतकाः व्यापारान्वय्याश्रयस्य कर्तृत्वात्तद्योतकाः कर्तृद्योतकाइति समुदायार्थः । ( द्योतयन्ति ) तात्पर्यं ग्राहयन्ति ॥ ३ ॥

नन्वेवं "क्रमादमुं नारदइत्यबोधि स" इत्यादौ पच्यते ओदनः स्वयमेवेत्यादौ च व्यभिचारः । कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति"कर्मवत् कर्मणा तुल्यक्रिय"इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि

कर्तुरेव बोधाद्यापारे एवाख्यातान्वयाच्च । अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ् तस्य "दीपजने"ति चिण् "चिणोलुगिति" तस्य लुक् इति साधनादित्याशङ्काशमाह ।

उत्सर्गोऽयं कर्म्मकर्त्तृविषयादौ विपर्य्ययात् ।
तस्माद्यथोचितं ज्ञेय द्योतकत्वं यथागमम् ॥ ४ ॥

( कर्म्मकर्तृविषयादौ ) पच्यते ओदनः स्वयमेवेत्यादौ अत्र ओदनाभिन्नाश्रयकः पाकानुकूलोव्यापारइति बोधः । कस्मादित्यादिपदग्राह्यम् अत्र सामान्यविशेषज्ञानपूर्वकएतन्नारदविषयकज्ञानानुकूलः लपणाभिन्नाश्रयकोऽतीतोव्यापारइति बोधः । ( यथोचितमिति ) सकर्म्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयचिण्यगादिकस्य द्योतकमिति भावः ॥ ४ ॥

एवं तिङाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपदर्श्य ( फलव्यापारयोरिति ) प्रतिज्ञातं धातोर्व्यापारवाचित्वं व्यवस्थापयति ।

व्यापारोभावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥

पचति पाकमुत्पादयति पाकानुकूला भावना तादृश्युत्पादनेत्यादिविवरणाद्धिभ्रियमाणस्यापि तद्वाचकतेति भावः । व्यापारपदं फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् अतएव पचतीत्यत्राद्यः स-

न्तापनत्वफूत्कारत्वचुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्व्वं सिद्धः। नचैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्व-मेव तदवच्छेदकं वाच्यम् रथो गच्छति जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधोलक्षणयेति नैयायिकरीतिः साध्वी, शक्यतावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्ववद्गुरुणि सम्भ-वात् तयोर्वैषम्ये वीजाभावात्। नच पचति पाकं करोतीति यत्नार्थकरोतिना विवरणाद्यत्नएवाख्यातार्थ इति वाच्यम्। रथोगमनं करोति वीजादिना अङ्कुरः कृत इति दर्शनात् कृञोयत्नार्थकताया असिद्धेः। किञ्च भावनाया अवा-च्यत्वे घटं भावयतीत्यत्रेव घटोभवतीत्यत्रापि द्वितीया स्यात् नचात्र घटस्य कर्त्तृत्वेन तत्संज्ञया कर्म्मसंज्ञायाबाधान्न द्विती-येति वाच्यम् अनुगतकर्त्तृत्वस्य त्वन्मते दुर्व्वचत्वेन घटस्याक-र्त्तृत्वात्। कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटा-दावभावात्। धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारक-मात्रातिव्यापकत्वात्। अपि च भावनाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात्। स्वार्थफल-व्यधिकरणव्यापारवाचित्वं स्वार्थव्यापारव्यधिकरणफलवाच-कत्वं वा सकर्म्मकत्वं भावनायावाच्यत्वमन्तरेणासम्भवि। अन्यतमत्वं तत्त्वमिति चेन्न एकस्यैवार्थभेदेनाकर्म्मकत्वसकर्म्म-कत्वदर्शनात् तदेतदभिसन्धायाह (कृञ)इति। अयं भावः व्यापारावाच्यत्वपक्षे फलमात्रमर्थइति फलितम्। तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम्। तथा च

यतो प्रयत्नइतिवत् फलस्थानीय यत्नवाचकत्वाविशेषादकर्म्म-कतापत्तिः उक्तरीत्या दुर्व्वारेति। तथा च(नहि यत्नः)इत्यत्र फलस्थानोऽयत्नेनेति शेषः। (क्रञः) इति धातुमात्रोपलक्षणं सर्वेषामप्यकर्म्मकता सकर्म्मकता वा स्यादिति भावः। अथ वा (व्यापारोभावना)इत्यंशेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन् नैयायिकाभ्युपगतं जानातिक्रञादेः केवलज्ञानयत्नादि क्रियामात्रवाचित्वं दूषयति (क्रञः)इति। अयं भावः फलांशस्यावाच्यत्वे व्यापारएव धात्वर्थः स्यात्। तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्म्मकत्वोच्छेदापत्तिः। नच क्रञादौ सकर्मकत्वव्यवहारोभाक्तइति नैयायिकोक्तं युक्तम्। व्यवहारस्य भाक्तत्वेऽपि कर्म्मणि लकारासम्भवात्। न हि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम्। एवञ्च ( नहि यत्न ) इत्यत्र यत्नमात्रमित्यर्थः॥ ५॥

अतएवाह।

**किन्तूत्पादनमेवातः कर्म्मवत्स्यात् यगाद्यपि।**
**कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद्दृशोरिव॥ ६॥**

(उत्पादनम्) उत्पत्तिरूपफलसहितं यत्नादि क्रञर्थइत्यर्थः। फलस्य वाच्यत्वे युक्त्यन्तरमाह(अतःइत्यादि। यतः क्रञोयत्नमात्रमर्थोनेष्यते (अतः कर्म्मवत्स्यादिति)पदेन कर्म्मवत्कर्म्मणा तुल्यक्रियइति सूत्रं लक्ष्यते। अयमर्थः यतएवास्योत्पादनार्थकता अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः

स्वयमेवेति यगादयोऽपुपपद्यन्ते। अन्यथा यत्नस्य कर्म्मनिष्ठ-त्वाभावात्तन्न स्यात् दृशिवत्। यथा दृश्यते घटः स्वयमेवेति न. दर्शनस्य घटावृत्तित्वात्तथा यत्नस्यापीति, तथा प्रयोगानापत्तेरिति॥ ६ ॥

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयतावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम् अन्यथा सकर्म्मकतानापत्तेः तथा च ज्ञायते घटः स्वयमेवेति किन्न स्यात्। एवं ग्रामोगम्यते स्वयमेवेत्याद्यपीत्याशङ्कां मनसिकृत्याह।

**निर्व्वर्त्त्ये च विकार्य्ये च कर्म्मवद्भावइष्यते।**
**न तु प्राप्ये कर्म्मणीति सिद्धान्तो हि व्यवस्थितः ॥७॥**

ईप्सितं कर्म्म त्रिविधं निर्वर्त्त्यं विकार्य्यं प्राप्यञ्च। तत्राद्ययोः कर्म्मवद्भावो, नान्त्ये, प्राप्यत्वञ्च क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते। नह्ययं घटः केनचिद्दृष्टो ग्रामोऽयं केनचिद्गतइति शक्यं कर्म्मदर्शनेनावगन्तुम्। घटं करोतीति निर्व्वर्त्त्यं, सोमं सुनोतीति विकार्य्यं च, तज्ज्ञातुं शक्यमिति न तत्प्राप्यम्। तथा च घटादेर्दृश्यादौ प्राप्यकर्म्मत्वान्नोक्तातिप्रसङ्गइति भावः। धातूनां फलावाचकत्वेत्यजिगम्योः पर्य्यायतापत्तिः क्रियावाचकत्वाविशेषात् फलस्योपलक्षणत्वेऽप्येकक्रियायाएव पूर्व्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्म्मकाणां फलवाचकत्वम् अकर्म्मकाणान्तु तन्निर्व्विवादमेव भू सत्तायामित्याद्यनुशासनाच्च।

अतएव "द्व्यर्थः पचिरिति" भाष्यं सङ्गच्छतइति दिक् ॥७॥

एवं सिध्यतु फलव्यापारयोर्वाच्यत्वम् किन्तु आख्यातवाच्यैव सा भावनान धातोः, प्राधान्येन प्रतीयमानव्यापारस्य धात्वर्थतायाः "प्रकृतिप्रत्यययोः प्रत्ययार्थप्राधान्यमिति,,न्यायविरुद्धत्वात् "तदागमे हि दृश्यतइति" न्यायविरुद्धत्वाच्च। एवञ्च स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्, आख्यातार्थव्यापाराश्रयत्वञ्च कर्त्तृत्वं वाच्यमित्यादि वदन्तं मीमांसकम्मन्यं प्रत्याह।

**तस्मात्करोतिर्धातोः स्याद्व्याख्यानं न त्वसौ तिङां।**
**पक्ववान् कृतवान्पाकं किं कृतं पक्वमित्यपि ॥ ८ ॥**

(तस्मात्) अभिप्रायस्थहेतोः सचेत्थम्। फलमात्रस्य धात्वर्थत्वे ग्रामोगमनवानिति प्रतीत्यापत्तिः संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारसत्त्वे पाकोभवतीत्यनापत्तिः, व्यापारविगमे फलसत्त्वे पाकोविद्यतइत्यापत्तिश्च। यत्तु भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति तन्न कर्त्राख्यातवत् "कर्त्तरि कृदि" त्यतएव तद्विधानलाभे भावे विधायकानुशासनवैयर्थ्यापत्ते स्तद्विरोधापत्तेश्च। अथ व्यापारोऽपि धात्वर्थइत्यभ्युपेयमिति चेत्तर्हि धातुतएव सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति। पचतीत्यस्य पाकं करोतीति विवरणात्मा(करोतिःधातो) एव (व्याख्यानं) विवरणम् अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः मीमांसकोक्तं बाधकमुद्धरन्

तन्मतं दूषयति नन्वित्यादिना । नासौ तिङां व्याख्यानम् पक्ववानित्यादावनन्वयापत्तेः । अयं भावः । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थप्राधान्यम" इत्यस्य हि विशेष्यतया प्रकृत्यर्थ प्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थितिर्हेतु-रिति कार्य्यकारणभावः फलितः । तथा च पक्ववानित्यत्र पाकः कर्म्मकारकं, क्तवतुप्रत्ययार्थः कर्तृकारकम् । तयोश्चारु-णाधिकरणरीत्या वक्ष्यमाणास्मद्रीत्या चान्वयासम्भवइति प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवाभावे क्व? प्राधान्यबोधक उक्तकार्य्यकारणभावः । नच

सम्बन्धमात्रमुक्तञ्च श्रुत्या धात्वर्थभावयोः ।

तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यतेइति ॥

भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वयः शङ्क्यः, योग्यताविरहात् अन्वयप्रयोजकरूपवत्त्वस्य तत्त्वात् । क्रियान्वयित्वमेव हि कारकान्वयितावच्छेदकमिति वक्ष्यते । तदेतदाविष्कर्त्तुं विवरणेन धात्वर्थक्तवत्वर्थयोः कर्म्मत्व-कर्तृत्वे दर्शयति कृतवान् पाकमिति । वस्तुतः प्रत्ययार्थः प्रधानमित्यस्य यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्य-यार्थः स प्रधानमेवेति वा नार्थः अजा अश्वा छागीत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्राधान्यापत्तेः छाग्यादेरनापत्तेश्च । किन्तूत्सर्गोऽयम् विशेष्यत्वादिना बोधस्तु तथाव्युत्पत्त्यनुरो-धात् । अतएव नैयायिकानां प्रथमान्तविशेष्यकएव बोधः । लक्षणायामालङ्कारिकाणां शक्यतावच्छेदकप्रकारकएव बोधो

मानयनकृतिरि

न नैयायिकादीनाम् । घटः कर्म्मत्वमित्यादौ विपर्य्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो न तद्व्युत्पत्तिरहितानाम् अन्येषां तन्निराकाङ्क्षमेवेत्यादिकं सङ्गच्छते । अतएव "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्" इत्याह भगवान् पाणिनिः । प्रधानं प्रत्ययार्थ इति वचनं नेत्यनुवर्त्त्य न कार्य्यम् अर्थस्य अर्थावबोधस्यान्यप्रमाणत्वात् व्युत्पत्त्यनुसारित्वादिति हि तदर्थः । एवं सत्यपि नियामकापेक्षणे "भाव प्रधानमाख्यात" मिति वचनमेव गृह्यतामिति सुधीभिरूह्यम् । "तदागमे हीति" न्यायोविवरणस्यातिव्याप्तमित्याह (किं कृतं पक्वमिति) । कृत्वा विवरणं प्रतीतिश्च पक्वमित्यत्रापीति, तत्रापि भावना वाच्या स्यादिति भावः । नन्वस्तु तिङ्इव कृतामपि भावना वाच्येत्यत आह अपीति । तथाचोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचकइति भावः । भवद्रीत्या प्रत्ययार्थत्वात्प्राधान्यापत्तिश्चेति द्रष्टव्यम् ॥ ८ ॥

व्यापारस्य धात्वर्थत्वे साधकान्तरमाह ।

> किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि ।
> किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥

कार्य्यमित्यत्र "ऋहलोर्ण्यदिति" कर्म्मणि ण्यत् पचनीयमित्यादौ चानीयर् आदिना ज्योतिष्टोमयाजी इत्यादौ करणे उपपदे कर्त्तरि णिनिः । एते च क्रियायोगमन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्याप्यसम्भवात् । नच गम्यमानक्रियामादाय

कारकयोगइति भाट्टरीतिर्युक्ता आख्यातेऽपि तथापत्तौ तत्रापि भावनाया वाच्यत्वासिद्ध्यापत्तेः । अथ लिङ्गसंख्यान्वयानुरोधात् कर्त्तुर्वाच्यत्वमावश्यकमिति तेनाक्षेपाद्भावनान्वयः स्यादिति मतम् तर्हि संख्यान्वयोपपत्तये आख्यातेऽपि कर्त्ता वाच्यः स्यात् । पक्ववानित्यादौ कालकारकान्वयानुरोधाद्भावनाया अपि वाच्यत्वस्यावश्यकत्वाच्चेति भावः । अपिना हेत्वन्तरसमुच्चयः तथाहि नखैर्भिन्नोनखभिन्नः हरिणा त्रातोहरित्रात इत्यादौ "कर्त्तृकरणे कृता बहुलमिति" समासो न स्यात् पुरुषोराज्ञो भार्य्या देवदत्तस्य इतिवदसामर्थ्यात् । नचाध्याहृतक्रियाद्वारा सामर्थ्यं वाच्यं दध्योदनः गुड़धाना इत्यादिवत्, अन्यथा तत्रापि" अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमिति समासो न स्यादिति वाच्यम् । तत्र विध्यानर्थक्यादगत्या तथास्वीकारेऽपि हरित्रातमित्यादौ साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य कर्तृकरणइत्यस्याक्षेपेण परम्परासम्बन्धे प्रवृत्त्ययोगात् । न चैकस्यां क्रियायामन्वयित्वमेव सामर्थ्यमिति शङ्क्यम्, असूर्य्यम्पश्येत्यादेरसमर्थसमासत्वानापत्तेः । इष्टापत्तौ कृतः सर्व्वोमृत्तिकयेत्यत्र कृतसर्व्वंमृत्तिकइत्यापत्तेः । न चात्र समासविधायकाभावः, (सह सुपा) इत्यस्य सत्त्वात् अन्यथा असमर्थसमासोऽपि विधायकाभावान्न स्यादिति । किञ्च भावनायास्तिङर्थत्वे भावयति घटमितिवत् भवति घटमित्यपि स्यात् धात्वर्थफलाश्रयत्वरूपकर्म्मत्वसत्त्वात् नचाख्यातार्थव्यापाराश्रयत्वेन कर्त्तृत्वात्

तत्संज्ञया कर्म्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वे पाचयति देवदत्तो विष्णुमित्रेणेत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ तृतीयानापत्तेः ग्रामं गमयति देवदत्तो विष्णुमित्रमित्यत्र विष्णुमित्रस्याकर्तृतापत्तेः ग्रामस्य गमिकर्म्मतानापत्तेश्च। तथा च ग्रामाय गमयति देवदत्तो विष्णुमित्रमित्यपि न स्यात्। "गत्यर्थकर्म्मणि द्वितीया चतुर्थ्यौ चेष्टायामनध्वनीति" गत्यर्थकर्म्मण्येव चतुर्थीविधानात्। एतेन णिजन्ते आख्यातार्थं उभयम् तदाश्रयत्वाद्देवदत्तयज्ञदत्तयोः कर्तृतेत्यपास्तम्। किञ्च तस्मिन् प्रयोगे आख्यातत्वस्यावश्यकत्वेनाख्यातशून्ये देवदत्तः पक्तेत्यादौ देवदत्तस्याकर्तृतापत्तेरिति दिक्। सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन्नुक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति (किञ्चेति) धातुसंज्ञाविधायकम् (भूवादयोधातव) इति सूत्रम्। तत्र भूश्च वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। ततो भूवौ आदी येषां ते भूवादयः। तथा च भूप्रभृतयो वासदृशा धातवइत्यर्थः। तच्च क्रियावाचकत्वेन, तथा च क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वं पर्य्यवसन्नम्। अत्र क्रियावाचित्वमात्रोक्तौ वर्ज्जनादिरूपक्रियावाचके हिरुग् नानेत्यादावतिव्याप्तिरिति भ्वादिगणपठितत्वमुक्तम् ॥ ९ ॥

तावन्मात्रोक्तौ चाह ।

सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः ।
न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥१०॥

गणपठितत्वमात्रोक्तौ सर्व्वनामाव्ययानामपि धातुत्वं स्यात्। तथा च याः पश्यन्तीत्यादौ, "आतोधातोः" इत्याकारलोपापत्तिः। ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणान्न सर्व्वनाम्नो ग्रहणं तस्य लाक्षणिकत्वात् इत्यत आह वेत्यादि। अव्यये वा इत्यादावतिप्रसङ्गः। तादृशस्यैव गणेऽपि पाठेन निर्णयासंभवात्। तथा च विकल्पार्थकोवातीति प्रयोगः स्यादिति भावः। न च गतिगन्धनार्थनिर्द्देशोनियामकः, तस्यार्थानादेशनादिति भाष्यपर्य्यालोचनया आधुनिकत्वलाभात्॥ १०॥

नन्वस्तु क्रियावाचकत्वे सति गणपठितत्वं धातुत्वं क्रिया च धात्वर्थएव न व्यापार इत्याशङ्कां समाधत्ते।

**धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वञ्च क्रियार्थता।**
**अन्योन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाश्रुतम्॥११॥**

यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रयइति ग्रहपदं पूरयित्वा व्याख्येयम्। यथाश्रुतं चान्यान्योन्याश्रयस्योत्पत्तौ ग्रहे वाऽप्रतिबन्धकत्वाभ्युपगमेनासङ्गत्यापत्तेः। न चान्यतमत्वं धातुत्वं सूत्रादिघटित्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह (अस्त्विति) व्यापारसन्तानः क्रिया तद्वाचकत्वे सति गणपठितत्वमित्यर्थः। ननु सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्व लक्षणमुच्यताम्। धात्वर्थत्वात्तेषां क्रियाशब्देन व्यवहाराभा-

ष्यादौ कृतोऽप्युपपत्स्यतइति चेन्न अन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारात् प्रवेशावश्यकत्वेन तदर्थकं वेत्यव्यये उक्तरीत्या गणपठितत्वसत्त्वेनातिव्याप्तेरिति ॥ ११ ॥

नन्वस्यैव धातुत्वे अस्तीत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तद्वाचकानामधातुत्वप्रसङ्गइत्यत आह ।

**अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।**
**अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥ १२ ॥**

(अस्त्यादौ) अस् भुवीत्यादौ (धर्म्यंशे) धर्मिभागे (भाव्ये) भाव्यत्वेन विवक्षिते । (अस्त्येव)प्रतीयतएव । अयमर्थः स ततोगतो न वेति प्रश्ने महता यत्नेनास्तीति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयतएव उत्पत्त्यादिबोधने तु सुतरां "रोहितोलोहितादासीद्बन्धुस्तस्य सुतोऽभवदित्यादि" ।

दर्शनात् । किञ्च अत्र भावनाविरहे लडादिव्यवस्था न स्यात् तस्याएव वर्त्तमानत्वादिविवक्षायां लड्विधानात् ।

" क्रियाभेदाय कालस्तु संख्या सर्व्वस्य भेदिकेति"

वाक्यपदीयादिति । नन्वेवमस्तीत्यत्र स्पष्टं कुतोन बुद्ध्यतइत्यतआह(अन्यत्रेति) (अशेषभावात्) भावनायाः फलसमानाधिकरणत्वात् । तथा च भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोषइति भावः । नन्वेवं किं करोतीति प्रश्ने पचतीत्युत्तरस्येवास्तीत्युत्तरमपि स्यादिति चेत् इष्टापत्तेः । आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्ने अस्तीत्युत्तरस्य सर्व्वसम्मतत्वात् । इतरत्र तु सुस्थतया निश्चिते किं करोतीति

स्तत्स्कपृथगुपस्थितैस्तच्छास्त्रीयकर्मसंज्ञाकार्यान्वय
त्वम् सकर्मकत्वम् तद  नन्वय्यर्थकत्वम् कर्म
म् १ तेनाध्यासिताभूमय इत्यत्र कर्मणि निष्टासिद्ध्यति ॥

तीति प्रश्नः पाकादिविशेषगोचरएवेत्यवधारणादस्तीति नोत्तरमिति ॥ १२ ॥ एकैकत्रावृत्तित्वे सति एकवृत्तित्वम्

ननु भावनायाः फलनियतत्वात् फलाश्रयस्य कर्म्मत्वात्सर्व्वेषां क्रियावाचकत्वे सकर्म्मकतापत्तिरित्यत आह ।

**फलव्यापारयोरेकनिष्ठतायामकर्म्मकः ।**
**धातुस्तयोर्धर्म्मिभेदे सकर्म्मकउदाहृतः ॥ १३ ॥**

(एकनिष्ठतायाम्) एकमात्रनिष्ठतायाम् भिन्नाधिकरणावृत्तितायामिति यावत् तेन गम्यादौ फलस्य कर्त्तृनिष्ठत्वेऽपि नातिव्याप्तिः।(अकर्म्मकः)यथा भ्वादिः (तयोः)(फलव्यापारयोः) आश्रयभेदे (सकर्म्मकः) इत्यर्थः । उक्तञ्च वाक्यपदीये ।

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।
अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मकइति ।

(बिभ्रदिति) स्वधारणानुकूलोव्यापारोऽत्रापि गम्यतइति भावः । (तेन कर्म्मणा) सकर्म्मकत्वन्तु (न अन्तर्भावात्) फलांशेन सामानाधिकरण्यसत्त्वादित्यर्थः (आत्मानमिति) जानाति इच्छतीत्यादौ च द्वावात्मानौ शरीरात्मा अन्तरात्मा च । तत्रान्तरात्मा तत्कर्म्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्म्मवत्कर्म्मणे"ति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्म्मकत्वमवधेयम् ॥ १३ ॥

नन्वसत्त्वभूतक्रियाया धात्वर्थत्वे पाकइत्यत्रापि तत्प्रत्ययापत्तिः । न चेष्टापत्तिः कृदभिहितोभावो द्रव्यवत् प्रकाशतइति भाष्यविरोधादित्यत आह ।

**आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता ।**
**प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ १४ ॥**

(आख्यातशब्दे) पश्य मृगो धावतीत्यादौ । (भागाभ्याम्) तिङन्ताभ्याम् प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तमपव्याख्यानम् पचतीत्यत्रापि भागद्वयसत्त्वात् (साध्यसाधनरूपता) यथाक्रमं ग्राह्या । साध्यत्वं क्रियान्तराकाङ्क्षानुत्थापकरूपवत्त्वम् । साधनत्वं कारकत्वेनान्वयित्वम् । (स घञादिष्वपीति) प्रकृत्या, साध्यावस्था । प्रत्ययेन साधनावस्था । इयान्विशेषः । घञाद्युपस्थाप्या लिङ्गसंख्यान्वयिनी कारकत्वान्वयिनी च आख्यातान्तोपात्ता तु नैवम् । तथापि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम् । नच घञन्ते धातुना तथाभिधाने मानाभावः, ओदनस्य पाकइति कर्म्मषष्ठ्या मानत्वात् । नचाध्याहृततिङन्तक्रियान्वयात् षष्ठी "कर्त्तृकर्म्मणोः कृतीति" कृदन्तेन योगएव तद्विधानात् "न लोकाव्ययनिष्ठाखलर्थ तृनामिति" लादेशयोगे षष्ठीनिषेधाच्च । एवं रीत्या काष्ठैः पाकइत्यादावपीष्टमेव, एवं फलांशोऽपि धातुना असत्त्वावस्थापन्नएवोच्यते । अतएव स्तोकं पचतीतिवत् स्तोकं पाकइत्युपपद्यतेइति ॥१४

एतदेव स्पष्टयति ।

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।**
**सिद्धभावस्तु, यस्तस्याः स घञादिनिबन्धनः ॥१५॥**

नच घञादिभिः सिद्धत्वेनाभिधाने मानाभावः, पाक-

इत्युक्ते भवति नष्टोवेत्याकाङ्क्षोत्थापनस्यैव मानत्वात् धातूपस्थाप्यायां तदसम्भवस्योक्तत्वात् स्तोकः पाकः इत्यनापत्तेश्च । तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्योद्वितीया घञर्थान्वये प्रथमा पुंल्लिङ्गता चेति तत्सिद्धये घञादेः शक्तिरुपेया । एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम् । नच घञन्तशक्त्युपस्थाप्यान्वये स्तोकः पाकइति भवतीति वाच्यम् । घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथाशक्तिकल्पनादिति दिक् । एवञ्च घञ्शक्त्यभिप्रायेण कृदभिहितइति भाष्यमतो न तद्विरोधइति भावः ॥ १५ ॥

ननु कारकाणां भावनान्वयनियमएव पाकइत्यत्रापि कर्म्मषष्ठ्यनुसारेण भावनाया वाच्यत्वं सिध्येत् सएव कुतइत्याशङ्कां समाधत्ते ।

**सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमोवतिः ।**
**धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ॥ १६ ॥**

सम्बोधनान्तस्य क्रियायामन्वयः । त्वं ब्रूहि देवदत्तेत्यादौ निघातानुरोधात् "समानवाक्ये निघातयुष्मदस्मदादेशा" इत्यनेन समानवाक्यएव तन्नियमात् । उक्तं हि वाक्यपदीये ।

सम्बोधनपदं यच्च तत् क्रियायाविशेषणम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथासतीति ।

पचति भवति देवदत्तेत्यादौ तु सूत्रभाष्यादिरीत्यैक-

वाक्यतासत्त्वात् स्यादेव निघातः । "तिङ्ङतिङ इति सूत्रेऽपि" तिङन्तानामप्येकवाक्यतास्वीकारात् । एकतिङ् वाक्यमिति वदतां वार्त्तिककाराणां मते परं न । वस्तुतः एकतिङ्विशेष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम् । (कृत्वोऽर्थाः) "क्रियाभ्यावृत्तिगणने कृत्वसुच्"इति क्रियायोगे तत्साधुत्वोक्तेः क्रियाया अभ्यावृत्तिः पुनः पुनः जन्म । तस्मिन् द्योत्ये इति तदर्थात् । (कारकम् ) कारके इत्यधिकृत्य तेषां व्युत्पादनात् । कारकशब्दोहि क्रियापरः करोति कर्त्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः । तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम् (प्रथमोवतिः) "तेन तुल्यं क्रिया चेद्वतिः" इति विहितः तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात् । (धातुसम्बन्धाधिकारे) "धातुसम्बन्धे प्रत्ययाः"इत्यधिकृत्य तेषां विधानात् । (असमस्तनञ्) समासायोग्यः प्रसज्यप्रतिषेधीयोनञित्यर्थः । उत्तरपदार्थान्वयेऽपि समासविकल्पेन पक्षे असमस्तत्वात् यथाश्रुतग्रहणायोगात् । न चासमस्तनञः क्रियान्वये मानाभावः न त्वं पचसि न युवां पचथः चैत्रोन पचति घटोन जायते इत्यादौ क्रियायाएव निषेधप्रतीतेः । अतएव विद्यमानेऽपि घटे तथा प्रयोगः । तथा च घटोनास्तीत्यत्राप्यस्तित्वाभावएवबोध्यते । नहि घटोन जायते

नास्तीत्यनयोर्धात्वर्थभेदमन्तरेणास्ति विशेषः। तथा च भूतले न घटइत्यत्राप्यस्तीत्यध्याहार्य्यम्। प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात्। शेषं नञर्थनिर्णये वक्ष्यते॥ १६॥

**तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम्।**
**साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम्॥ १७॥**

"यस्य च भावेन भावलक्षणम्" इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात् "षष्ठी चानादर"इति तदग्रिमसूत्रेऽपि चकाराद्भावेनेत्यप्यन्वेतीत्यर्थः (साधुत्वमिति) तत्स्वरूपन्तु वक्ष्यते ( क्रिययैवेति ) अयं भावः। भूवादिसूत्रादिषु प्रायः क्रियाशब्देन भावनाव्यपदेशात्तत्र तस्य साङ्केतिकी शक्तिः फलांशे क्वाचित्कः क्रियतइति यौगिकः प्रयोगः। तथा च संज्ञाशब्दस्यानपेक्षप्रवृत्तत्वेन बलवत्त्वाद्भावनान्वयएव साधुता लभ्यते। अतएव संज्ञाशब्दप्राबल्यात् रथन्तरमुत्तराग्रन्थपठितऋक्ष्वेव गेयम् नतु वेदे तदुत्तरपठ्यमानऋक्ष्विति नवमे निर्णीतम्। किञ्च फलांशोऽपि भावनायां विशेषणं कारकाण्यपि क्वचित्तथाभूतानीति। "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति" न्यायेन सर्व्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति। न हि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुकइति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्वियन्तीति मीमांसका अपि मन्यन्ते। एवञ्च विशेष्य-

तथा कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थिति-हेतुरिति कार्य्यकारणभावस्य क्लृप्तत्वात् यत्रापि पक्ता पाक इत्यादौ भावना गुणभूता तत्रापि क्लृप्तकार्य्यकारणभावानुरोधात्तस्यामेवान्वय इत्यवसीयते इत्यादि भूषणे प्रपञ्चितम्। केचित्तु भूतले घटः देवदत्तोघटमित्यादावन्वयबोधाकाङ्क्षानिवृत्त्योरदर्शनान्न तद्व्यतिरेकेण साधुत्वलाभइत्याहुः ॥१७॥

स्वयमुपपत्तिमाह।

**यदि पक्षे पिवत्यर्थः कारकस्त्व नञादिषु।**
**अन्वेति त्यज्यतां तर्हि चतुर्थ्यास्पृहिकल्पना ॥ १८ ॥**

पर्व्वतोवह्निमान् धूमात् महानसवत् भूतले न घटः। भूतले घटइत्यादिपदात् एवमादिष्वनुशासनविरोधेऽपि यदि साधुत्वमन्वयश्चाभ्युपेयते तर्हि चतुर्थ्यां स्पृहिकल्पनापि त्यज्यतामित्यर्थः। अनुशासनानुरोधतौल्ये अर्द्धजरतीयमयुक्तमिति भावः ॥ १८ ॥

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वय इत्याह।

**अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः।**
**क्रिया सम्बध्यते तद्वत्कृतपूर्व्यादिषु स्थिता ॥ १९ ॥**

न विविच्यग्रहोग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत्। तथा च ग्रामं गतइत्यत्र यथा क्तप्रत्ययार्थे गुणीभूतापि क्रिया ग्रामादिकर्म्मभिः सम्बध्यते तथा

कृतपूर्वी कटमित्यत्रापि गुणभूता इत्यादिभिरित्यर्थः । नच वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात्तत्रान्तर्गता भावना पदार्थैकदेशइति कथं तत्रान्वयइति वाच्यम् नित्यसापेक्षेष्वेकदेशेऽपि "देवदत्तस्य गुरुकुलं" "चैत्रस्य नप्ते"त्यादाविवान्वयाभ्युपगमात् । एवं भोक्तुं पाकः भुक्ता पाकइत्यपि द्रष्टव्यम् ॥ १९ ॥

अतिप्रसङ्गमाशङ्क्य समाधत्ते ।

**क्त्वोऽर्थाः क्तातुमुन्च त्स्यु रिति चेत्सन्ति हि क्वचित् ।**
**अतिप्रसङ्गोनोह्नाव्योऽभिधानस्य समाश्रयात् ॥२०॥**

भोक्तुं पाकः भुक्ता पाकइत्यादौ "तुमुण्ण्वुलौ क्रियायां क्रियार्थायाम्" "समानकर्तृकयोः पूर्व्वकाल"इति क्रियावाचकोपपदे क्रिययोः पूर्व्वोत्तरकाले विधीयमाना अपि तुमुन्नादयो गुणभुतां तामादाय यथा जायन्ते तथा क्त्वोऽर्थाः अपि स्युः। एकः पाकइत्यत्र"एकस्य सकृच्च"द्वौ पाकौ त्रयश्चत्वारइत्यत्र "द्वित्रिचतुर्भ्यः सुच्" । पञ्चेत्यत्र क्त्वसुच् स्यात् । तथा च सकृत्पाकः द्विः त्रिश्चतुः पाक इत्याद्यापत्तिरिति चेदिष्टापत्तिः द्विवचनमित्यादिदर्शनात्। अतिप्रसङ्गस्त्वनभिधानान्नेत्याह। अतीति। "नहि वचिरन्तिपरः प्रयुज्यत"इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः। केचित्तु "क्रियाभ्यावृत्तिगणन" इत्यत्र क्रियाग्रहणं व्यर्थं तस्याएवाभ्यावृत्तिसंभवेन सामर्थ्यात्तल्लाभात्। तथा च साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम् नच पाकइत्यादौ तादृशीति ना-

तिप्रसङ्गः । द्विर्वचनमिति च द्विःप्रयोगो द्विर्वचनमिति व्युत्पत्त्या "द्विर्वचनेऽचीति" ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥ २० ॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां शाब्दादावश्यकी इति धातोरेव भावना वाच्या नाख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते ।

**भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।**
**साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥ २१ ॥**

भेद्यं विशेष्यं भेदकं विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदः तन्निबन्धनं साधुत्वम् । अयमर्थः । व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवावच्छेदकतया कल्प्यधर्म्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णयएव शक्तिनिर्णयउच्यते । अतिरिक्तशक्तिवादेऽप्याख्यातानामसाधुता भावनायां स्यादेव तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे यज्ञे कर्म्मण्यसाधुशब्दप्रयोगात् "नानृतं वदे" दिति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादिति । ननु त्वन्मते नानृतमिति निषेधः क्रत्वर्थएवं न सिध्येत् आख्यातेन कर्त्तुरुक्तत्वात् श्रुत्या पुरुषार्थएव स्यात् प्रकरणाद्धि क्रत्वर्थता तच्च श्रुतिविरोधे बाध्यतइति चेन्न तिङ्र्थस्तु विशेषणमित्यनेन परिहृतत्वात् न हि गुणभूतः कर्त्ता निषेधं स्वाङ्गत्वेन गृहीतुमलम् । भावना तु प्रधानं

तं गृहीतुं समर्थेति प्रकरणात् क्रत्वर्थतैव। अस्तु वा क्रतु यत्नपुरुषधर्मः अनशने विशेषाभावात् "जञ्जभ्यमानो न ब्रूयान्मयि दक्षक्रतू" इति वाक्योक्तमन्त्रविधिवत् इत्यादि भूषणे प्रपञ्चितम्। नन्वाख्यातस्य भावनायामसाधुत्वे तत-स्तद्बोधो न स्यात् साधुत्वज्ञानस्य शब्दबोधेहेतुत्वादित्यत आह बोधइति असाधुत्वेऽपि साधुत्वभ्रमाद्बोधोऽस्तु नाम अपभ्रंशवत्। असाधुत्वन्तु स्यादेवेति भावः। वस्तुतः साधुत्व-ज्ञानं न हेतुस्तद्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इत्यसाधु-रनुमानेनेत्यत्र वक्ष्यामः ॥ २१ ॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्म्मिते।
पूर्णोभूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ॥

इति वैयाकरणभूषणसारे धात्वर्थाख्यातसामान्यार्थयो-र्निरूपणम्।

---

प्रत्येकं दशलकाराणामर्थं निरूपयति।

**वर्त्तमाने परोक्षे श्वोभाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमात् ज्ञेया लडादयः ॥२२॥**

लडादयष्टितः षट् क्रमेणार्थेषु द्रष्टव्याः। तथाहि वर्त्तमानेऽर्थे लट्, "वर्त्तमाने लड्" इति सूत्रात्। प्रारब्धापरि-समाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम्। पचतीत्या-दावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट्-प्रयोगः। आत्माश्चि पर्व्वताः सन्तीत्यादौ तत्तत्कालिकानां

क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम् । उक्तञ्च भाष्ये "इह भूतभविष्यद्वर्त्तमानानां राज्ञां क्रियाः तिष्ठतेरधिकरणमिति" ।

परतोभिद्यते सर्व्वमात्मा तु न विकम्पते ।

पर्व्वतादिस्थितिस्तस्मात्पररूपेण भिद्यतइति ।

वाक्यपदीये च । एवं "तमआसीत्" "तुच्छेनाभ्वपिहितं यदासीत्" । "अहमेकः प्रथममास वर्त्तामि च भविष्यामि" चेत्यादिश्रुतयोपि योज्याः । तच्च वर्त्तमानत्वादि लडादिभिर्द्योत्यते । क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्य्यग्राहकत्वेनोपयोगात् । अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव । अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम् ।

लिडर्थमाह परोक्षे इति । "परोक्षे लिडिति" सूत्रात् । कालस्तावदद्यतनानद्यतनभेदेन द्विविधः द्विविधोऽपि भूतभविष्यद्रूपः । तत्रानद्यतने भूते परोक्षे लिडित्यर्थः । तेनाद्यतने भूते अनद्यतने भविष्यति भूतेऽप्यपरोक्षे च न लिट् प्रयोगः स्यात् । परोक्षत्वञ्च साक्षात्करोमीत्येऽतादृशविषयताशालिज्ञानविषयत्वम् । नच "क्रिया नामेयमत्यन्तापरिदृष्टा पूर्व्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितु"मिति भाष्यात्तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्त्तकमिति वाच्यम् पिण्डीभूतायानिदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात् । अन्यथा पश्य

मतोर्लिङ्" "आशिषि लिङ् लोटौ" इत्यादिसूत्रोक्ता हेतुहेतुमद्भावादयो गृह्यन्ते। "योब्राह्मणायावगुरेत्तं शतेन यातयोदिति" यथा।

लुङर्थमाह। भूतमात्रे इति। भूतसामान्ये इत्यर्थः। भूतइत्यधिकृत्य "लुङिति" सूत्रात्। तत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्। तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः। विद्यमानध्वंसप्रतियोगो घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलोव्यापार इति बोधः॥ अयमत्र संग्रहः। कालो द्विविधः। अद्यतनोऽत्यद्यतनश्च। आद्यस्त्रिविधः भूतभविष्यद्वर्त्तमानभेदात्। अन्त्योद्विविधः भूतोभविष्यश्च। तत्र वर्त्तमानत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लिङ्। अनद्यतने भूत तत्त्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षयां लिट्। तादृशे भविष्यति लुट् इति द्रष्टव्यः।

लृङर्थमाह। सत्यामिति। क्रियाया अतिपत्तिरनिष्पत्तिः तस्यां गम्यमानायाम्। (भूते भाविनि) हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्निमित्ते लृङ् क्रियातिपत्ताविति" सूत्रात्। लिङोनिमित्तं हेतुहे[illegible]वादि। यथा सुवृष्टिश्चेदभविष्यत् सुभिक्षमभवि[illegible]श्चेत्प्र-ज्वलिष्यत् ओदनमपक्ष्यदित्यादौ। अ[illegible]श्रयकप्रज्वलनानुकूलव्यापाराभावप्रयुक्त ओद[illegible]विक्लित्य-

नुक्तव्यापाराभावइति शाब्दबोधइतिरीत्या द्रष्टव्यम्। अयञ्च अर्थनिर्देश उपलक्षणम्। अर्थान्तरेऽपि बहुशो-विधानदर्शनात्। प्रसङ्गत्वादेश्चेशार्थेषु शक्तिरन्यत्र लक्ष-णेति मतान्तररीत्या चोक्तम् एतेषां क्रमनियामकत्वानुबन्ध-क्रमएव। अतएव पञ्चमोलकार इत्यनेन मोमांसकैर्लेट् व्यावह्रियत इति दिक्॥ २३॥

इति वैयाकरणभूषणसारे लकारविशेषार्थनिरूपणम्।

---

सुबर्थमाह।

**आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।**
**यथायथं विभक्त्यर्थः "सुपां कर्म्मेति" भाष्यतः॥ २४॥**

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः। तथाहि "कर्म्मणि द्वितीया" तत्र "कर्त्तुरीप्सिततमम्" क्रियाजन्यफलाश्रयइत्यर्थः क्रियाजन्यफलवत्त्वेन कर्म्मणएव कर्त्तरीप्सिततमत्वात्। "तथा युक्तञ्चानीप्सित"मित्यादिसंग्रहाच्चैवमेव युक्तम्। इप्सितानी-प्सितयोः शाब्दबोधे भानाभावेन संज्ञायामेव तदुपयोगो न तु वाच्यकोटौ तत्प्रवेशः। तथा च क्रियायाः फलस्य च धातु नैव लाभादनन्यलभ्य आश्रयएवार्थः। तत्त्वञ्चाखण्डशक्तिरूप मवच्छेदकम्। ओदनं पचतीत्यत्र विक्लित्त्याश्रयत्वात्कर्म्मता। घटं करोतीत्यत्रोत्पत्त्याश्रयत्वात् उत्पत्तेर्धात्वर्थत्वात्। जानातीत्यत्रावरणभङ्गरूपज्ञाधात्वर्थफलाश्रयत्वात्। अती-तानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्यावश्यकत्वात्।

अन्यथा यथा पूर्व्वं न जानामीत्यापत्तेः। अतीतादेराश्रयता च विषयतया ज्ञानाश्रयता नैयायिकानामिव सत्कार्य्यवादसिद्धान्तान्नोपपद्यते इति। उक्तञ्च

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयतइति।

ननु चैत्रोग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोगरूपफलाश्रयत्वात्कर्म्मतापत्तौ चैत्रं चैत्रो गच्छतीत्यापत्तिः। प्रयागतः काशीं गच्छति चैत्रे प्रयागं गच्छतीत्यापत्तिश्च क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्रयागेऽपि सत्त्वादिति चेन्न ग्रामस्येव चैत्रस्यापि फलाश्रयत्वेऽपि तदीयकर्तृसंज्ञया कर्म्मसंज्ञाया बाधेन चैत्रश्चैत्रमिति प्रयोगासम्भवात्। द्वितीयोत्पत्तौ संज्ञायाएव नियामकत्वात्। अन्यथा गमयति कृष्णं गोकुलमित्यत्रेव पाचयति कृष्णेनेत्यत्रापि कृष्णपदाद्द्वितीयापत्तेः। शाब्दबोध श्चैत्रमित्यत्र स्यादिति चेन्न तथा व्युत्पन्नानामिष्टापत्तेः। उच्यते वा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिर्हेतुरिति कार्य्यकारणभावान्तरम्। प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः। प्रयागस्य कर्म्मत्वन्तु सम्भावितमपि न, समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्य उक्तप्रायत्वात्। नैयायिकास्त्वाद्यदोषवारणाय परसमवेतत्वम् द्वितीयदोषवारणाय धात्वर्थतावच्छेदकत्वं फले विशेषणं

द्वितीयावाच्यमित्युपादद्रते परसमवेतत्वं धात्वर्थक्रियाया मन्वेति तथैव कार्य्यकारणभावान्तरकल्पनात्। परत्वमपि द्वितीयया स्वप्रकृत्यर्थापेक्षया वोध्यते। तथाच चैत्रस्तण्डुलं पचति इत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थताव च्छेदकविक्लित्तिशालित्वात्तण्डुलानां कर्म्मता। शाब्दबोधस्तु तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्त्यनुकूलतण्डुलान्यसमवेतक्रियाजनककृतिमांश्चैत्रइत्याहुः। तन्न रोचयामहे परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। अतिप्रसङ्गः किं द्वितीयायाः शाब्दबोधस्य वा। नाद्यः। तावद्वाच्यताकथनेऽपि तत्तादवस्थ्यात् गमयति कृष्णं गोकुलमितिवत्पाचयति कृष्णं गोपइत्यापत्तेः तण्डुलं पचति चैत्रइतिवत्तण्डुलं पच्यते स्वयमेवेत्यापत्तेश्च विक्लित्त्यनुकूलतण्डुलान्यसमवेताग्निसंयोगरूपधात्वर्थाश्रयत्वात्। शाब्दबोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः। परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य परसमवेतत्वस्य च इष्टान्वयलाभायानेकशः कार्य्यकारणभावाभ्युपगमे गौरवतरत्वादिति स्पष्टं भूषणे। एतच्च सप्तविधम्।

निर्वर्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम्।
औदासीन्येन यत्प्राप्तं यच्च कर्त्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्व्वकमिति

वाक्यपदीयात्।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते।

तन्निर्वर्त्यं विकार्य्यन्तु द्विधा कर्म्म व्यवस्थितम्।
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्।
किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यतइति च तत्रैवोक्तम्। ॥"त्यादि प्राप्यं ग्रामं गच्छन् स्त्रीं स्पृशति

घटं करोतीत्याद्यम्। काष्ठं भस्म करोतीति, सुवर्णं कुण्डलं करोतीति च द्वितीयम्। घटं पश्यतीत्युदासीनम्। विषं भुङ्क्ते इति द्वेष्यम्। गां दोग्धीति संज्ञान्तरैरनाख्यातम्। क्रूरमभिक्रुध्यतीत्यन्यपूर्व्वकम्॥

कर्त्तृतीयाया आश्रयोऽर्थः। तथाहि "स्वतन्त्रः कर्त्ता" स्वातन्त्र्यञ्च धात्वर्थव्यापाराश्रयत्वम्।

धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यतइति
वाक्यपदीयात्। अतएव।

यदा यदीयोव्यापारोधातुनाभिधीयते तदा स कर्त्तेति स्थाली पचत्यग्निः पचति एधांसि पचन्ति तण्डुलः पच्यते स्वयमेवेत्यादि सङ्गच्छते। नन्वेवं "कर्म्मकर्त्तृव्यपदेशाच्चेति" "सूत्रे" मनोमयः प्राणशरीरइति वाक्यस्थमनोमयस्य जीवत्वे वाक्यशेषे तस्य "एतमितः प्रेत्याभिसम्भवितास्मीति" प्राप्तिकर्म्मत्वकर्त्तृत्वव्यपदेशोविरुद्धइति भगवता व्यासेन निर्णीतं कथं सङ्गच्छताम्। उच्यते जीवस्यैव ज्ञेयत्वे प्राप्तिकर्म्मत्वमपि वाच्यम्। कर्त्तृत्वञ्च तस्य आख्यातेनो

त्तम्। न चैकस्यैकदा संज्ञाद्वयं युक्तम् कर्तृसंज्ञया कर्म्मसंज्ञाया बाधात्। तथाचैतमिति द्वितीया न स्यात्। कर्म्मकर्तृतायाञ्च यगाद्यापत्तिरिति शब्दविरोधद्वारा भवति स भेदहेतुः। एवञ्च व्यापारांशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः। कारकचक्रप्रयोक्तृत्वं क्रियाश्रयत्वं वा दण्डः करोतीत्यत्राव्याप्तम्। अयञ्च त्रिविधः। शुद्धः प्रयोजकोहेतुः कर्म्म कर्त्ताच। मया हरिः सेव्यते। कार्य्यते हरिणा। गमयति कृष्णं गोकुलम्। मदभिन्नाश्रयको हरिकर्म्मकसेवनानुकूलो व्यापारः। हर्य्यभिन्नाश्रयकउत्पादनानुकूलोव्यापारः। गोकुलकर्म्मकगमनानुकूल कृष्णाश्रयकव्यापारानुकूलोव्यापारइति शाब्दबोधाः। करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ। तथाहि "साधकतमं करणम्"। तमबर्थः प्रकर्षः स चाव्यवधानेन फलजनकव्यापारवत्ता। तादृशव्यापारवत्कारणञ्च करणम्। उक्तञ्च वाक्यपदीये।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्।
वस्तुतस्तदनिर्द्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यतइत्येषा विवक्षा दृश्यते यतइति।

विवक्ष्यतइत्यनेन सकृदनेकेषां तदभावाद्द्वितीयासप्तम्यादेरवकाशं सूचयति। नचैवं "कर्त्ता शास्त्रार्थवत्त्वा"त् इत्युत्तरमीमांसाधिकरणे "शक्तिविपर्य्ययादिति" सूत्रेणान्तःकरणस्य कर्तृत्वे करणशक्तिविपर्य्ययापत्तिरुक्ता न युज्ये-

तेति वाच्यम् । "तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति श्रुत्यन्तरे करणतया क्लृप्तैव कर्तृतां प्रकल्प्य भ्रान्तिविपर्ययापत्तिनिष्प्रमाणा कल्पेतेत्यभिप्रायात्। वस्तुतस्तु अस्युच्चयमात्रमेतदिति "यथा च तक्षोभयथा, इत्यधिकरणे, भाष्य एव स्पष्टम्। इत्यादि प्रपञ्चितं भूषणे। सप्तम्या अप्याश्रयोऽर्थः । "सप्तम्यधिकरणे च"इत्यधिकरणे सप्तमी। तच्च "आधारोऽधिकरणमि"ति सूत्रादाधारः। तच्चाश्रयत्वम्। तत्राश्रयांशः शक्यः तत्त्वमवच्छेदकम् । न चाश्रयत्वमात्रेण कर्मकर्तृकरणानामाधारसंज्ञा स्यात्। स्यादेव यदि ताभिरस्या न बाधः स्यात्।"कारके" इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रयइत्येवं यद्यपि तात्पर्य्यं तथाप्यत्र कर्तृकर्मद्वारा तदाश्रयत्वमस्त्येव स्थाल्यादेर्भूतलकटादेश्चेति स्थाल्यां पचति भूतले वसति कटे शेते इत्याद्युपपद्यते । उक्तञ्च वाक्यपदीये ।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ।

एतच्च त्रिविधम् । औपश्लेषिकं वैषयिकमभिव्यापकञ्च। कटे शेते, गुरौ वसति, मोक्षे इच्छास्ति। तिलेषु तैलमिति। एतच्च "संहितायामिति" सूत्रे भाष्ये स्पष्टम् ।

अवधिः पञ्चम्यर्थः । अपादाने पञ्चमी । तच्च "ध्रुवमपायेऽपादान"मिति सूत्रात्(अपायः)विश्लेषजनकक्रिया तत्रावधिभूतमपादानमित्यर्थकादवधिभूतमिति भावः। उक्तञ्च

वाक्यपदीये।

> अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
> ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते।
> पततोध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ।
> तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते।
> उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्म्मजे।
> विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते।
> मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।

मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक् इति। अस्यार्थः (अपाये) विश्लेषहेतुक्रियायाम् (उदासीनम्) अनाश्रयः। (अतदावेशात्)तत्क्रियानाश्रयत्वात्। एवञ्च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं फलितम्। वृक्षात्पर्णं पततीत्यत्र पर्णस्य तद्वारणाय सत्यन्तम्। धावतोऽश्वात्पततीत्यत्राश्वस्य क्रियाश्रयत्वाद्विश्लेषहेत्विति। कुड्यात्पततोऽश्वात्पततीत्यत्राश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तत्र विरहमित्याह यस्मादश्वादिति। तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः। एवमश्वनिष्ठक्रियानाश्रयत्वात्कुड्यादेरपि ध्रुवत्वमित्याह तस्यापीति। उभयकर्म्मजविभागस्थले विभागस्यैक्यात्तद्विश्लेषजनकक्रियानाश्रयत्वाभावात्परस्पराम्मेषावपसरत इति न स्यादित्याशङ्क्य समाधत्ते उभावपीति। मेषान्तरेति। यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेषस्यापरमेषक्रियामादाय ध्रुव-

त्वन् तथात्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति । तथा च विश्लेषाश्रयत्वे सति तज्जनक तत्क्रियानाश्रयत्वं तत्क्रियायामपादानत्वं वाच्यम् । क्रिया चात्र धात्वर्थोनतु स्पन्दः । तेन वृक्षकर्म्मजविभागवति वृक्षे वृक्षात्पर्णं पततीति सङ्गच्छते । वस्तुतो नैतावत्पञ्चम्या वाच्यम् । किन्तु अवधेर्लक्षणमात्रं द्वितीयार्थोक्तरीत्या प्रयोगातिप्रसङ्गस्यासम्भवेन वाच्यकोटौ प्रवेशस्य गौरवेणासम्भवादिति तु प्रतिभाति । न चैवमपि वृक्षात् स्पन्दतइति स्यादिति शङ्क्यम् आसनाच्चलितः राज्यात्स्खलितइति वदिष्टत्वात् । एतेन पञ्चमीजन्यापादानत्वबोधे सकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः । नचैवमपि वृक्षात्त्यजतीति दुर्व्वारम् कर्म्मसंज्ञया अपादानसंज्ञाया बाधेन पञ्चम्यसम्भवात् । भ्रमात् कृते तथाप्रयोगे यदि बोधाभावोऽनुभवसिद्धस्तर्हि पञ्चमीजन्यापादानत्वबोधे त्यज्यादिभिन्नधातुजन्यबुद्धेर्हेतुत्वं वाच्यम् । बलाहकाद्विद्योततइत्यादौ निःसृतेत्यध्याहार्य्यम् । रूपं रसात्पृथगित्यत्र तु बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम् । पृथग्विनेति पञ्चमी वा । इदञ्च

निर्द्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यतइति ॥

वाक्यपदीयात्त्रिविधम् । यत्र साक्षाद्धातुना गतिर्निर्द्दिश्यते तन्निर्द्दिष्टविषयम् । यथाश्वात्पतति । यत्र धात्व-

न्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम् । यथा वलाहकाद्विद्योतते । निःसरणाङ्गे विद्योतने द्युतिर्व्व-र्त्तते । अपेक्षिता क्रिया यत्र तदन्यम् । यथा कुतो-भवान्? पाटलिपुत्रात् । अत्रागमनमर्थमध्याहृत्यान्वयः कार्य्यः ।

उद्देश्यश्चतुर्थ्यर्थः तथाहि "सम्प्रदाने चतुर्थी" तत्र "कर्म्मणा यमभिप्रैति स सम्प्रदानमिति" सूत्रात् (कर्म्मणा) करणभूतेन (यमभिप्रैति) ईप्सति तत् कारकं सम्प्रदानमित्य-र्थकादुद्देश्यः । इदमेव शेषित्वम् । तदुद्देश्यकेच्छाविषयत्वञ्च शेषत्वमित्येव पूर्व्वतन्त्रे निरूपितम् । अतएव "प्रासनवन्मैत्रा-वरुणाय दण्डप्रदान"मितत्रधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिः किन्तु चतुर्थ्युश्रुतार्थकर्म्मेति तत्र निर्णीतम् । रजकाय वस्त्रं ददा-तीत्यपि खण्डिकोपाध्यायः शिष्याय चपेटं ददातीति भा-ष्योदाहरणादिष्टमेव । वृत्तिकारास्तु

"सम्यक् प्रदीयते यस्मै तत्सम्प्रदानम्" इत्यन्वर्थसंज्ञया स्वत्वनिवृत्तिपर्य्यन्तमर्थं वर्णयन्तो रजकस्य वस्त्रमिता-वाहुः । इदञ्च

अनिराकरणात्कर्त्तुस्त्यागाङ्गकर्म्मणेप्सितम् ।
प्रेरणानुमतिभ्याञ्च लभते सम्प्रदानतामिति ॥

वाक्यपदीयाच्चित्रिधम् । सूर्य्यायार्घं ददातीत्याद्यं, नात्र सूर्य्यः प्रार्थयते नानुमन्यते न निराकरोतीति । प्रेरकम्,

विप्राय गां ददाति। अनुमन्त्, उपाध्यायाय गां ददाति। अत्र सर्वत्र प्रकृतिप्रत्ययार्थयोरभेदः संसर्गः विभक्तीनां धर्म्मि वाचकत्वात्। धर्म्मवाचकत्वे "कर्म्मणि द्वितीयेति" सूत्रस्वरसभङ्गापत्तेः कर्म्मार्थकक्तप्रत्ययजिताद्रौ तथादर्शनाच्च द्वितीयार्थकबहुव्रीहौ प्राप्तोदकइत्यादौ धर्म्मिवाचकतालाभाच्च।

सुपां कर्म्मादयोऽप्यर्थाः संख्या चैव तथा तिङामिति।

भाष्याच्चेति दिक्। आश्रयस्यापि प्रकृतेरेव लाभान्न विभक्तिवाच्यता। किन्त्वाश्रयत्वमात्रं वाच्यम्। तदेव च तादात्म्येनावच्छेदकम्। करणतृतीयायाश्च व्यापारोऽपि। पञ्चम्याविभागमात्रं, चतुर्थ्याउद्देश्यत्वमात्रम् अतएवाल्पत्याधिकरणमपि न विरुध्यतइत्यभिप्रेत्याह शक्तिरेव वेति। षष्ठ्यामपीति शेषः। "शेषे षष्ठी"ति सूत्रात्तस्याः सम्बन्धमात्रं वाच्यम् कारकषष्ठ्यास्तु शक्तिरेवेत्यूह्यम्। "सप्तमीपञ्चम्यौ कारकमध्य"इतिसूत्रे शक्तिः कारकमिति पक्षस्य भाष्ये दर्शनात्। एवञ्च देवदत्तस्य गौर्ब्राह्मणाय गेहाद्गङ्गायां हस्तेन मया दीयतइत्यत्र देवदत्तसम्बन्धिनी या गौस्तदभिन्नाश्रयकत्यागानुकूलो ब्राह्मणोद्देश्यको गेहनिष्ठविभागजनको गङ्गाधिकरणको हस्तकरणको मन्निष्ठोव्यापारइति बोधः यथायथम् उक्तप्रकारेण। अत्र मानमुपदर्शयन् घटं जानातीत्यादौ द्वितीयाया विषयतायां लक्षणेति वह्याकुलं वदतो नैयायिकादीन् प्रत्याह सुपां कर्म्मेतीति। अयं भावः।

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु चेति ।

वार्त्तिकतद्भाष्याभ्यां कर्मादेर्वाच्यतायास्तन्नियमस्य च लाभः । तथा हि "स्वौजसमौट्" "कर्मणि द्वितीया" "द्व्येकयोर्द्विवचनैकवचने" इत्यादेः, "लः कर्मणि च" "तिप् तस् झि" "तान्येकवचनद्विवचने" त्यादेरेकवाक्यतया कर्मादेस्तत्संख्यायाश्च वाच्यता लभ्यते । तथा तन्नियमश्च द्विविधो लभ्यते । द्वितीया कर्मण्येव, तृतीया करण एवे, त्येवमादिरर्थनियमः । कर्मणि द्वितीयैव, करणे तृतीयै, वेत्येवं प्रत्ययनियमश्च । उभयथापि सिद्धनियमविरुद्धं लक्षणादिकमसाधुत्वप्रयोजकमिति पक्षे कर्मणि "नाव्ययं वदे" दिति निषेधविषयोऽभवत्येवेति स्वेच्छया लक्षणापि विभक्त्यप्रयोजिकैव । अतएव "विभक्तौ न लक्षणे" त्यादिर्नैयायिकवृद्धानां व्यवहारइति दिक् ॥ २४ ॥

इति वैयाकरणभूषणसारे सुबर्थनिर्णयः ।

---

नामार्थानाह ।

एकं द्विकं त्रिकञ्चाथ चतुष्कं पञ्चकं तथा ।
नामार्थाइति सर्व्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ २५ ॥

एकं जातिः लाघवेन तस्याएव वाच्यतौचित्यात् अनेकव्यक्तीनां वाच्यत्वे गौरवात् । नच व्यक्तीनामपि प्रत्येकमेकत्वाद्विनिगमनाविरहः । एवं हि एकस्याएव व्यक्ती

शक्यस्वीकारे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम्। जात्या तु सहाश्रयत्वमेव संसर्ग इति लाघवम्। किञ्च विशिष्टवाच्यत्वमपेक्ष्य नागृहीतविशेषणन्याया-ज्जातिरेव वाच्येति युक्तम्। व्यक्तिबोधस्तु लक्षणया एवञ्च तत्र विभक्त्यर्थान्वयोऽप्युपपद्यते इति दिक्। यद्वा केवल-व्यक्तिरेवैकशब्दार्थः केवलव्यक्तिपक्षेण ग्रहणस्यैकशेषस्य चारम्भेण तस्यापि शास्त्रसिद्धत्वात्। युक्तं चैतत्। व्यवहारेण व्यक्तावेव तद्ग्रहणात्। सम्बन्धितावच्छेदकजातेरैक्याच्छक्तिरेकैवेति न गौरवमपि। नचैवं घटत्वमपि वाच्यं स्याच्छक्यता-वच्छेदकत्वात्तथा च नागृहीतविशेषणन्यायात्तदेव वाच्य-मस्त्विति शङ्काम् अकारणत्वेऽपि कारणतावच्छेदकत्ववद-लक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्ववत्तथापि सम्भवात्। उक्तञ्च

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।

शब्दः सुकरसम्बन्धो नच व्यभिचरिष्यतीति।

वस्तुतस्तु "न ह्याकृतिपदार्थस्य द्रव्यं न पदार्थ" इति भाष्याद्विशिष्टं वाच्यम्। एकमित्यस्य चायमभिप्रायः शक्ति-ज्ञाने विषयतयावच्छेदिका जातिरेकैव। तथा च घटत्वविशिष्टबोधे घटत्वांशे अन्याप्रकारकघटत्वशक्तिज्ञान-त्वेन हेतुतेति कार्य्यकारणभावइत्यादि प्रपञ्चितं भूषणे। तदेतदभिप्रेत्याह द्विकमिति। जातिव्यक्ती इत्यर्थः पूर्व्वपक्ष-विरोधपरीहारः पूर्व्ववत्। त्रिकमिति। जातिव्यक्तिलिङ्गा-नीत्यर्थः। सत्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्।

अविवक्षं पुंस्त्वम् । अत्रायः स्त्रीत्वं तत्तच्छब्दनिष्ठं वाच्यस्य तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते । केषाञ्चिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात् । एवञ्च पदार्थपदे पुंस्त्वमेव । व्यक्तिपदे स्त्रीत्वमेव । वस्तुपदे नपुंसकत्वमेवेति सर्वत्रैवायं पदार्थः, इयं व्यक्तिः । इदं वस्त्विति व्यवहारः तटस्तटी तटमिति चोपपद्यते । तच्च लिङ्गमर्थपरिच्छेदकत्वेनान्वेतीति पश्वादिशब्दोक्तं "पशुना स्तौति" पशुमित्यादिविधि न छाग्यादीनङ्गत्वेन प्रयोजयतीति विभावनीयम् । नच व्यक्त्यादिशब्दोक्तलिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम् व्यक्तिशब्दस्य नियतस्त्रीलिङ्गत्वेन तथासम्भवेऽपि पशुशब्दस्य नियतपुंलिङ्गत्वे प्रमाणाभावात् । "पश्वानपायुं गुहाचरन्तम्"। "पश्वे नृभ्यो यथा गवे" इत्यादिवेददर्शनाच्च मीमांसायां चतुर्थे पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वात्नानेकपशुभिः पशुस्त्रिया वा यागइति प्रतिपादितत्वाच्च । वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुंस्त्वस्य व्याकरणे निर्णीतत्वाद्विदभाष्येऽपि "जसादिषु छन्दसि नावचन" मिति नाभावाभाव इत्युक्तेः पशुशब्दस्य नियतपुंस्त्वनिर्णयात् । प्रकृते "छागोवा मन्त्रवर्णादिति" न्यायेनैव निर्णयः । मन्त्रवर्णे हि "छागस्य वपाया मेदस" इति श्रूयते । तत्र छागस्येति छाग्याजस्त्वभावितमिति भवति ततः पुंस्त्वनिर्णयइति विस्तरेण प्रपञ्चितं भूषणे । (चतुष्कम्) संख्यासहितं विभा-

मित्यर्थः। (पञ्चकम्) कारकसहितं चतुष्कमित्यर्थं। नन्व-
न्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यम् तत एव लिङ्गादी-
नामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावादिति चेन्नत्यस् प्र-
त्ययवर्ज्जिते दधि पश्येत्यादौ प्रत्ययमजानतोऽपि बोधात्-
प्रकृतेरेव वाचकत्वं कल्प्यते। लिङ्गानुशासनस्य प्रकृतेरेव
दर्शनाच्चेति। अतएवैषु पक्षेषु न निर्बन्धः प्रत्ययस्यैव वाच-
कताया युक्तत्वात्।

- द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय इति।

वाक्यपदीयेऽपि पक्षद्वयस्य व्युत्पादनात्। शास्त्रे इति
बहुषु स्थलेषु व्युत्पादनं व्यञ्जयितुम्। प्राधान्येन तु सरूपसू-
त्रादौ व्यक्तम्॥ २५॥

शब्दस्तावच्छाब्दबोधे भासते।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।

अनुविद्धमिव ज्ञानं सर्व्वं शब्देन भासते।

इत्याद्यानुभविकोक्तिः। विष्णुमुच्चारयेत्यादावर्थोच्चा-
रणासम्भवेन विनाशब्दविषयं शाब्दबोधासङ्गतिश्चेति सोऽपि
प्रातिपदिकार्थः। नच लक्षणया निर्व्वाहः। निरूढलक्ष-
णायाः शक्त्यनतिरेकात् जबगडशमुच्चारयेत्यादौ शक्त्या-
ग्रहेण शक्यसम्बन्धरूपलक्षणाया अग्रहाच्च अज्ञातायाश्च
वृत्तेरनुपयोगात्। गाङ्गमुच्चारयेत्यादिभाषाशब्दानुकरणे
साधुतासम्प्रतिपत्तेस्तेषां शक्त्यभावेन परम्परये लक्षणाया
असम्भवाच्चेत्यभिप्रेत्य षोढापि क्वचित्प्रातिपदिकार्थइत्याह।

सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्य उपन्यास-
स्यासङ्गतिश्च ॥ एतेन क्रियाकारकसम्बन्धो ऽन्तरङ्ग इति तन्नि-
मित्ता विभक्तिरन्तरङ्गोपपदार्थेन तु पत्निकादिविशिष्टकारकभा-
वमूलकः सम्बन्ध इति तन्निमित्ता बहिरङ्गेत्यपास्तं नमस्यतीत्यत्र
नमःपदार्थे ऽपि क्रियाकारकभावेनैवान्वयात् । अत एव नमः-
पदार्थस्यापि क्रियात्वं गुरूयतौ सुस्पष्टमेव ॥ सहयुक्ते [२.३.-
१९] इत्यादौ च प्रधाने गम्यमानाप्रधानार्थेयं भाष्य उपन्यस्ते-
त्यलं विस्तरः ॥ ९४ ॥

नन्वदसुपञ्ज्ञित्यादौ पूर्वस्यापि गुणापत्तिरत आह ।

## अनन्त्यविकारे ऽन्त्यसदेशस्य ॥ ९५ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्रसक्तावन्त्यसदेशस्यै-
वेति तदर्थः । अन्यथा धात्वादेरित्यस्य नेता सोतेत्यादावेव
स्यात् न तु नमति सिञ्चतीत्यादौ ॥ अनन्त्यविकार इति च
लिङ्गम् ॥ अन्त्येन समानो देशो यस्य सो ऽन्त्यसदेशः । तत्त्वं
चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम् । अत एव शिव
इत्यादौ न संप्रसारणे [६.१.३७] इति चरितार्थम् ॥ अल्लोपो
ऽनः [६.४.१३४] इत्यादेरनन्त्ये साक्षाच्चरितार्थत्वाभावप्रवृत्ति-
रन्यत्र यणं यज्वादिष्वादिनन्त्याद्यस्याकारस्य लोप इष्य-
तेऽस्यैवाङ्गस्य चत्वरीत्यादावित्याद्यनयस्याकारस्यानादि-
कादिनरवयत्र मध्यादिविशेषानेकानेकाश्रयानापेक्षायामा
वश्यकत्वात् ॥ न चैवं ष्यङः संप्रसारणम् [६.१.१३] इति

सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्। वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथा सिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या प्रतिविधेयं दोषेषु प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात्॥ मिमार्जिषतीत्यर्थं च। तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्द्वित्वे परत्वादभ्यासकार्यं ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासङ्कस्वत्वेन सिद्धिर्लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः॥ यत्तु न संप्रसारण इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं तस्यायमर्थः। एतत्त्वप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति व्यधादावन्त्यसमानदेशयणो ऽभावादिति। नैतान्येतस्याः प्रयोजनानीति पाठो ऽपि क्वचिद्दृश्यते॥ वाचनिक्यवैषा। स्पष्टा च ष्यङः [६.१.१३] इति सूत्रे ऽदसो ऽसेः [८.२.८०] इति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्य इत्यन्यत्र विस्तरः॥ ९५॥

नव्यक्तानुकरणस्यातः [६.१.९८] इति पररूपं पटत् इति पटितीत्यादावलो ऽन्त्यस्य [१.१.५२] इत्यन्त्यस्य प्राप्नोतीत्यत आह।

## नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे॥ ९६॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ भृञामित् [७.४.७६] इत्याद्यन्त्यस्यैव। अभ्यासो ऽनर्थको ऽर्थावृत्त्यभावात्किंतूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम्॥ एषालो ऽन्त्यात्सूत्रे भाष्ये

स्पष्टा फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवा-
वधार्यताम् ॥ ९६ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रिया [१.२.६७] इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह।

**प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ ९७ ॥**

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः॥ स्पष्टा चेयं पुमान् स्त्रिया [१.२.६७] नपुंसकमनपुंसकेन [१.२.६९] इत्यनयोर्भाष्ये ॥ अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च [३.१.२६] इत्यत्र भाष्यकैयटयोः ॥ ९७ ॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीप्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यादत आह ।

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ ९८ ॥**

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य॥ योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम्। रथकाराधिकरणन्यायसिद्धोऽयमर्थः॥ कश्चित्तु दीधीवेवीटाम् [१.१.६] इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेञ्वीनामिति। तन्न। तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ ९८॥

ननु वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोक्ष इत्याद्यपि स्यादत आह।

## व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ ९९ ॥

लक्ष्यानुसाराद्व्यवस्था बोध्या ॥ शाछोः [७.४.४१] इति सूत्रे लटः शतृ [३.२.१२४] इत्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ ९९ ॥

## विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०० ॥

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् ॥ यस्य हलः [६.४.४९] इत्यत्र भाष्ये स्पष्टेयम् ॥ १०० ॥

नन्वाशंसायां भूतवच्च [३.३.१३२] इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह ।

## सामान्यातिदेशे विशेषानतिदेशः ॥ १०१ ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः ॥ इयमनित्या न ल्यपि [६.४.६९] इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि ॥ स्पष्टं चैतत् सर्वं स्थानिवत्सूत्रे भाष्ये ॥ १०१ ॥

ननु तित्स्वरितम् [६.१.१८५] इति स्वरितत्वं किरतीत्यादावपि स्यादत आह ।

## प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १०२ ॥

इयं चाङ्गस्य [६.४.१] इति सूत्रे भाष्ये पठिता । वर्णग्रहणे

च न प्रवर्तत इति तत्रैव कैयटे स्पष्टम्। अत एव सनाशंस-भिक्ष उः [३.२.१६८] वले [६.३.११८] इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ॥ परे तु तित्स्वरितम् [६.१.१८५] इति सूत्र एषा परिभाषा लक्ष्यसंस्कारार्थ भाष्ये क्वापि नाश्रितेति कैयटे-नोक्तम्। अङ्गस्य [६.४.१] इति सूत्रे तत् प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता। अत एव तिति प्रत्ययग्रहणं कर्तव्य-मिति वार्त्तिककृतोक्तम्॥ उक्तसूत्रयोर्व्याख्यानात्प्रत्यययोरेव ग्रहणमित्याहुः ॥१०२॥

ननु विपराभ्यां जेः [१.३.१९] इत्यात्मनेपदं परा सेना जय तीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह।

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥१०३॥

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम्॥ सहचरणं सदृशयोरेवेति सहचरित-शब्देन सादृश्यवानुच्यते। रामलक्ष्मणावित्यादावपि सादृश्य-मेव नियामकम्। सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च॥ ध्वनितं चेदं कर्मप्रवचनीययुक्ते द्वितीया [२.३.८] इति सूत्रे भाष्ये। तत्र हि पञ्चम्यपाङ्परिभिः [२.३.-१०] इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीप्राप्तिमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दो ऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य को ऽन्यः सहायो

भवितुमर्हत्यन्यो वर्जनार्थो यथास्य गोः सहायेनार्थ इति गौरेवा-नीयते नाश्वो न गर्दभ इत्युक्तम्। तेन हि सदृशानामेव प्रयोगे सहायभावो दर्शितः॥ ह्रिस्विद्यतुः [८.२.४३] इति सूत्रे साहचर्येणैव क्त्वोऽर्थस्य ग्रहणे सिद्धे क्त्वोऽर्थग्रहणाद्वेषा-नित्या। तेन दीधीवेवीटाम् [१.१.६] इत्यत्र धातुसाहचर्ये ऽप्यभ्यासस्येटो ग्रहणमित्यन्यत्र विस्तरः॥ १०३॥

नन्वस्थि [७.१.७५] इत्याद्यनङ् प्रियसख्ना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह।

## श्रुतानुमितयोः श्रुतसंबन्धो बलवान्॥ १०४॥

श्रुतेनैव संबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः। प्रक-रणादितः श्रुतेर्बलवत्त्वादिति भावः। एवं च तत्र लिङ्ग-कस्थ्यादीनामेव विशेषणं नाङ्गस्य। शिशीलुग्नुम्विधिषु तु श्रूयमाणस्याभावात्प्रकरणप्राप्ताङ्गस्यैव विशेषणम्। अत एव वा नपुंसकस्य [७.१.७९] इति सूत्रं वा शाविति न कृतम्। तत्र नपुंसकग्रहणं हि श्रूयमाणस्य प्रकृतस्यैव नपुंसकत्वे यथा स्याद्बहवो दन्ता येषु तानि कुलानि बहुदन्तीत्यत्र मा भूद्ब-हूनि दन्ति येषु ते बहुदन्त इत्यत्र यथा स्यादित्येवमर्थम्॥ स्पष्टं चेदं स्वमोर्नपुंसकात् [७.१.२३] इत्यत्र भाष्ये॥ केचि-त्त्वचो रहाभ्यां द्वे [८.४.४६] इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरस्तद्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः। तन्न। तत्कार्यित्वस्याभावेन सिद्धेरित्यन्यत्र विस्तरः॥ १०४॥

ननु तत्पुरुषे तुल्यार्थ [६.२.२] इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा गातिस्थाघुपाभूभ्यः [२.४.७७] इति लुक् पै शोषण इत्यतः कृतात्त्वात्परस्यापि स्यादत आह ।

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥१०५॥**

लक्षणेनेत्यर्थः ॥ तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात् । द्वितीयो हि विलम्बोपस्थितिकः । पै इत्यस्य पा इति रूपं लक्षणानुसंधानपूर्वकं विलम्बोपस्थितिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषाबीजम् ॥ इयं च वर्णग्रहणे ऽप्योत्सूत्रे भाष्ये संचारितत्वात् । यत्तु वर्णग्रहणे नैषादेचः [६.१.४५] इत्यत्रोपदेशग्रहणादिति तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ॥ अनित्या चेयं भुवश्च महाव्याहृतेः [८.२.७१]इति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ १०५ ॥

नन्वेवं देङो दोधातोश्च कृतात्त्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्त्वे प्रणिमातेत्यादौ नेर्गदनद [८.४.१७] इति णत्वं न स्यात्तथा गै इत्यस्यात्त्वे घुमास्था [६.४.६६] इतीत्वं न स्यादत आह ।

**गामादाग्रहणेष्वविशेषः॥ १०६ ॥**

अत्र ज्ञापकं दैपः पित्त्वम् । तद्दादाविति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन । तेन चैकदेशानुमतिद्वारा

संपूर्णपरिभाषा ज्ञाप्यते ॥ इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका दाधा घु [१.१.२०] इति सूत्रे भाष्ये स्पष्टा ॥ गातिस्था [२.४.७७] इति सूत्र इणादेशगाग्रहणमेवेष्यत इत्यन्यत्र विस्तरः ॥ १०६ ॥

ननु वृध्द्यादिसंज्ञाः समुदाये स्युरत आह ।

## प्रत्येकं वाक्यपरिसमाप्तिः ॥ १०७ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ १०७ ॥

नन्वेवं संयोगसंज्ञा समाससंज्ञाभ्यस्तसंज्ञापि प्रत्येकं स्यु रत आह ।

## क्वचित्समुदायेऽपि ॥ १०८ ॥

गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् ॥ लक्ष्यानुरोधेन च व्यवस्था ॥ १०८ ॥

ननु य्वाख्यौ [१.४.३] इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादणत्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह ।

## अभेदका गुणाः ॥ १०९ ॥

असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः ॥ अत्र चास्थिदधि [७.१.७५] इत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्ध उदात्तग्रहणं ज्ञापकम् ॥ स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव । उञः [१.१.१७] ऊँ [१.१.१८] इत्यत्रानुनासिकप्रश्लेषणोच्चारणे यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या ।

पथिमथ्यृभुक्षाम् [७.१.८५] इत्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा। एतदर्थमेवास्ति यन्न इत्युक्तम्॥ न चैवमस्थ्यादीनां नब्विषयस्य [फि०-२.३] इत्याद्युदात्तत्वान्त्यादेशस्यानङः स्थान्यनुरूपे ऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम्। परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात्॥ चतस्रर्याद्युदात्तनिपातनं करिष्यते वधादेश आद्युदात्तनिपातनं करिष्यते पदादयो ऽन्तोदात्ता निपात्यन्ते सहस्य स उदात्तो निपात्यत इत्यादिभाष्यं त्वेकश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन। त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः॥ परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणं तद्रूपाद्यन्नात्तन्तत्वोदात्तादिविवक्षा। तिसृचतसृत्वत वनद्वयुक्ते ऽन्तोदात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चारणीये तत्तदुच्चारणं विवक्षार्थम्॥ संपूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठितेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्यापि पाठो यथा द.ाण्डिनायनादिसूत्र ऐक्ष्वाकेति। वयमध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्तथापि व्याख्यानतो ऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः॥ विधेयाप्रविपक्षे त्वप्रत्यय इति निषेधान्न गुणभेदकत्वेन सवर्णग्रहणम्। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः। अत एव तद्वानासाम् [४.४.-

१२५] इति सूत्रनिर्देशः। अन्यथा प्रत्यये भाषायामिति नित्यमनुनासिकः स्यात्॥ जातिपक्षे तु नास्योपयोग इति बोध्यम्। यू इत्यादौ दीर्घमात्रवृत्तिजातिनिर्देशान्न च्वितिरित्यन्यत्र विस्तरः॥ १०९॥

ननु सर्वनामानि [१.१.२७] इत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोगस्य साधुत्वं स्यादत आह।

## बाधकान्येव निपातनानि॥ ११०॥

तत्तत्कार्ये नाप्राप्ते निपातनारम्भात्। पुराणप्रोक्तेषु [४.३.१०५] इति निपातितपुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम्। पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये॥ इयं सर्वादिसूत्रे भाष्ये स्पष्टा॥ अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम्॥ ११०॥

ननुस्वधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वत्वाप्रवृत्तौ हलादिःशेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह।

## पर्जन्यवल्लक्षणप्रवृत्तिः॥ १११॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते लक्ष्ये लक्षणस्येति न्यायेन न पुनर्ह्रस्वः। तदुक्तमिको झल् [१.२.९] इति सूत्रे भाष्ये। कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति। सिद्धेऽपि ह्रस्वादिकारीत्यर्थः॥ न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम्। समो वा लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ समः सुटि [८.३.५] इति सूत्रस्यैव मानत्वात्। संप्रसारणाच्च-

[६.१.१०८] सिचि वृद्धिः [७.२.१] इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ॥ अत्र विकारकृतो लक्ष्यभेदो नेति सिचि वृद्धिरिति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥ १११ ॥

ननु स्यन्द्धातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वान्न वृद्भ्यश्चतुर्भ्यः [७.२.५९] इति निषेधस्य वहिरङ्गत्वेनान्तरङ्गत्वादूदित्लक्षणस्येड्विकल्पस्यापत्तिरत आह ।

## निषेधाश्च बलीयांसः ॥ ११२ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ॥ चतुर्भ्य इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते ॥ अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः । अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः । अत एव द्वन्द्वे च [१.१.३१] विभाषा जसि [१.१.३२] इति चरितार्थम् ॥ विध्युन्मूलनाय प्रवृत्तिरस्या बीजम् ॥ न लुमता [१.१.६३] कमेर्णिङ् [३.१.३०] इत्यनयोर्भाष्ये स्पष्टैषा ॥ ११२ ॥

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह ।

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ ११३ ॥

यस्यार्थः प्रकृत्या प्रत्याय्यते सो ऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः । स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः ॥ महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम् ॥ सुपि स्थः [३.२.४] इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥११३

## योगविभागादिष्टसिद्धिः ॥ ११४ ॥

इष्टसिद्धिरेव न त्वनिष्टापादनं कार्यमित्यर्थः । तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ ११४ ॥

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ ११५ ॥

तत्रतत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ ११५ ॥

## ज्ञापकसिद्धं न सर्वत्र ॥ ११६ ॥

स्पष्टमेव पठितव्ये ऽनुमानाद्बोधनमसार्वत्रिकत्वार्थमित्यर्थः । तेन ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीयमिति तात्पर्यम् । भाष्ये ऽपि ध्वनितमेतन्ङ्याप्सूत्रादौ ॥ ज्ञापकेति न्यायस्याप्युपलक्षणम् ॥ न्यायज्ञापकसिद्धानामपि केषाञ्चित्कथनमन्येषामनित्यत्वबोधनायेति भावः । यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं ज्ञापकसिद्धं च तत्रानल्विधाविति ॥ ११६ ॥

ननु द्रोग्धाद्रोग्धा द्रोढाद्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्व एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह ।

## पूर्वत्रासिद्धीयमद्वित्वे ॥ ११७ ॥

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । पूर्वत्रासिद्धम् [८.२.१] इत्यधिकारभवं शास्त्रमस्या लिङ्गम् ॥ यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः ॥ सर्वस्य द्वे [८.१.१] इति सूत्रे भाष्ये स्पष्टम् ॥ ११७ ॥

ननु गोष्वश्वेषु च स्वामीत्यादिवद्गोष्वश्वानां च स्वामीत्यपि स्यात्स्वामीश्वर [२.३.३९] इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह ।

एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ ११८ ॥

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः ॥ कृञ्चानुप्रयुज्यते [३.१.४०] इति सूत्रे भाष्ये स्पष्टेयम् ॥ ११८ ॥

ननु विध्याधेत्यादौ परत्वाद्धलादिः शेषे वस्य संप्रसारणं स्यादत आह ।

संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ ११९ ॥

तदाश्रयं संप्रसारणाच्च [६.१.१०८] इति पूर्वरूपम् ॥ वस्तुतो लिट्यभ्यासस्य [६.१.१७] इति सूत्र उभयेषांग्रहणस्योभयेषां संप्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति लिट्यभ्यासस्येति सूत्रे भाष्ये स्पष्टम् । फलान्तराण्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा । णौ च संश्चङोः [६.१.३१] इत्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ ११९ ॥

यत्तु

क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥१२०.क॥

तेन निसमुपविभ्यो ह्वः [१.३.३०] इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥

# औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १२०.ख ॥

तेन दादेर्धातोः [८.२.३२] इत्यत्रौपदेशिकधातोरेव ग्रहण मिति तन्न। तयोर्निर्मूलत्वाद्भाष्यगाव्यवहृतत्वाच्च। न च त्रिकृति प्रकृतिं गृह्णातीति ग्रहिज्या [६.१.१६] इति सूत्रस्थभाष्येणा-द्यायास्तिरस्कारात्। निसमुपविभ्यो ह्व इत्यादौ ह्वेञो ऽनु-करणे सौत्रः प्रयोगः। आत्त्वविषय एवात्मनेपदं प्रयोगस्था नामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये अन्यापि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्च संमता। इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूप-माश्रीयते यत्रास्यैतद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते क उपदेशो नामेति घसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्य संमता च॥ भाष्ये सानुबन्धकेत्यादि प्रकृताभि प्रायेण। दादेरिति सूत्रे दादिपदस्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः॥

यदपि नन्वजर्घा वेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा यङ्लुकि वेभिदितेत्यादावेकाचः [७.२.१०] इति इण्निषेध स्यादत आह।

**श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।**
**यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥१२०.ग॥**

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च ॥ हन्ति यातिवाति । सनीवन्त [७.२.४९] इति सूत्रे भरेति । दीङो युडचि [६.४.६३] अनुदात्तङितः [१.३.१२] । दिवादिभ्यः श्यन् [३.१.६९] । एकाच उपदेशे [७.२.१०] इत्युदाहरणानि ॥ द्वित्वं सनाद्यन्ताः [३.१.३२] इति भूवादयः [१.३.१] इति च धातुत्वं च भवत्येव गुणो यङ्लुकोः [७.४.८२] इत्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन भषावो ऽप्यजर्घा इत्यादौ भवति । अत एव श्वीदितः [७.२.१४] इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः ॥ एकाच उपदेशे ऽनुदात्तात् [७.२.१०] इति सूत्र एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशे ऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति तदपि न भाष्यानुक्तत्वादेकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च । न च वधिः स्थान्युपदेश एकाजेवेति वाच्यम् । साक्षादुपदेशसंभवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ॥ किंचोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावुपदेश उगन्तत्वमादाय श्र्युकः क्किति [७.२.११] इतीण्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम् ॥ न च भाष्ये यङ्लोपे वेमिदिते त्यादाविट्प्रवृत्त्यर्थमुपदेशे ऽनुदात्तादेकाचः श्रूयमाणादङ्गादि-

त्यर्थं सनोट्प्रतिषेधो वक्तव्यो बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तल्लेडिष्टः। यङ्लोपेत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम्। किंच तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्यैव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम्। इड्विषये यङ्लुको लोके ऽनभिधानेन च्छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात्। अव्ययैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमिह वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः॥ न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम्। एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डे ऽस्तित्ववदेतच्च दयतेः [७.४.९] इति सूत्रे भाष्ये स्पष्टम्। एवं च प्रकृतभाष्यासंगतिरिति वाच्यम्। आक्षेप आक्षिप्तस्यान्वये च मानाभावात्। अङ्गत्वं तु विशिष्ट एवेत्येकाचो द्वे [६.१.१] इति सूत्रे भाष्ये स्पष्टम्। निरूपितं च तनादिशेषे शब्देन्दुशेखरे। धातुत्वं तूत्तरखण्ड एव॥ अत एवैकाचो वशो भष् झषन्तस्य स्ध्वोः [८.२.३७] इति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये न तु प्रनिजमजर्घा इति॥ अजर्घा वेभिदीतीत्यादौ श्नम्श्नादयस्तु चर्करीतं चेत्यस्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणव्याप्राप्त्या न भवन्ति॥ छान्दसत्वादेव कार्यान्तराणामपि च्छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः। भाषायां तु तादृशानामभाव एव। गितप्गपादिनिर्देशास्तु भवतेरः [७.

४.७३] इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ॥ १२० ॥

ननु जभो ऽचि रधेश्च नेट्यलिटीत्येव सूच्यतां किं द्वौ रधिग्रहणेनेत्यत आह ।

## पदगौरवाद्योगविभागो गरीयान् ॥ १२१ ॥

प्रतिवाक्य भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव ॥ परन्तु भाष्यासंमतेयम् । टाङसि [७.१.१२] इति सूत्रस्थभाष्यविरुद्धा च । तत्र चेनादेशेकारप्रत्याख्यान योगविभागेनैव कृतमिति बहवः ॥ २१ ॥

## अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥१२२॥

ए ओङ् ऐ औच्सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव न तु मात्रालाघवविचार इत्युकालो ऽज्झ्रस्व [१.२.२७] अपृक्त एकाल् [१.२.४१] इत्यादिसूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे ऽल्ग्रहणहल्ग्रहणयोर्विशेषविचारे सञ्ज्ञायां हल्ग्रहणं खल्वविय [२.४.५८] इति सूत्रे ऽणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं स्येति सूत्रे ऽणिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रोण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् ॥ अचि श्नु [६.४.७७] इति सूत्र इण इत्येव सिद्धे य्वोरिति संस्पृद्य ग्रहणात्स पूर्वेणेण्ग्रहणं तत्र विभक्तिनिर्देशे संस्पृद्य ग्रहणे च सार्धास्तिस्रो मात्रा इण्ग्रहणे तिस्रो मात्रा इति

लण्सूत्रे भाष्योक्तेस्तथोतः श्यनि [७.३.७१] इति सूत्रे शितीति वक्तव्यं तत्रायमप्यर्थः ष्ठिवुक्लमु [७.३.७५] इति सूत्रे शितीति न कर्तव्यं भवतीति भाष्ये न केवलं मात्रालाघवं यावदयमप्यर्थं इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १२२ ॥

॥ इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भज-

नागोजीभट्टकृतः

परिभाषेन्दुशेखरः समाप्तः ॥

---

कलिकाता संस्कृतविद्यालयाध्यापक श्रीतारानाथतर्क-

वाचस्पति भट्टाचार्य्येण संस्कृतः ।

---

॥ शुभं भवतु ॥

---

THE FOLLOWING IS THE LIST OF

PROFESSOR TARKAVACHASPATI'S

WORKS & PUBLICATIONS.

| No. | Title | Rs. | As. |
|---|---|---|---|
| 1. | Asubodham Vyakaranam. | 3 | |
| 2. | Dhaturupadarsha. | 2 | |
| 3. | Sabdastoma Mahanidhi. | 10 | |
| 4. | Sidhantakoumudi with Sarala. | 11 | |
| 5. | Sidhantavindusara. | ,, | |
| 6. | Tuladanadipadhati. | 4 | |
| 7. | Gaya Shradhadipadhati. | 5 | |
| 8. | Sabdartharatna. | ,, | [illegible] |
| 9. | Vakyamanjari. | , | |
| 10 | Vrittaratnakara and Chhandomanjari with notes | .. | [illegible] |
| 11. | Venisanhara with a Commentary. | 1 | |
| 12. | Mudrarakshasa. Ditto | 1 | |
| 13 | Ratnavali Ditto | 1 | |
| 14. | Malavikagnimitra. Ditto | 1 | |
| 15. | Dhananjayavijaya. Ditto | .. | |
| 16. | Mahaviracharita Ditto | 1 | |
| 17. | Sankhyatatwakoumudi Ditto | 2 | |
| 18. | Veiyakarana Bhusanasara. | 2 | |
| 19. | Lilavati. | ,, | [illegible] |
| 20. | Vijaganita | 1 | |
| 21. | Sishupalabadha with Mallinatha. | 6 | |
| 22. | Kiratarjuniya. Ditto | 2 | |
| 23 | Kumarasambhava Purvakhandam. Ditto | 1 | |
| 24. | Kumarasambhava Uttarakhandam. | ,, | |
| 25 | Panini Sutra. | ,, | [illegible] |
| 26. | A comprehensive Sanscrit Dictionary (In the Press) | 30 | |
| 27 | Kadambari with the commentary. | [illegible] | |
| 28. | Rajaprasasti. | ,, | |
| 29. | Gayitri. | ... | |
| 30. | Anumanachintamanididhiti. | 2 | |
| 31. | Sarvadarshanasangraha | 2 | |
| 32. | Bhaminibilasa with notes. | 1 | |
| 33 | Hitopodesha with notes. | 1 | |
| 34. | Bhasha parichheda and Muktavali. | 1 | |
| 35 | A discourse on the Hindu polygamy | ,, | |
| 36. | Dashakumaracharita with notes | 1 | |
| 37. | Paribhashendusekhara. | 1 | |
| 38. | Kavikalpadruma. | ,, | |
| 39. | Chakradatta | 2 | |

Apply to Pandit Jibananda Vidyasagara B. A.

The 10th February [illegible] Govt. Sanskrit College [illegible]

# संस्कृतवर्णपरिचय

प्रथमो भागः ।

श्रीयुतबाबुभुवनचन्द्रवसाकमहोदयस्य प्रार्थनया

श्रीलक्ष्मीनारायणवसाकेन

प्रणीतः ।

द्वितीय संस्करणम्

कलिकातानगरे

श्रीयुक्तबाबुभुवनचन्द्रवसाक संस्थापित संवादज्ञान-

रत्नाकराख्ययन्त्रे तद्द्वारैव १८२१ संवत्सरे

प्रकाशितम् ।

[निमतला घाट ष्ट्रीट ८ संख्यक भवन ।]

# संस्कृतवर्णपरिचय

## प्रथमो भागः ।

---

स्वरवर्णाः ।

अ आ इ ई उ ऊ ऋ ॠ
অ আ ই ঈ উ ঊ ঋ ৠ

ऌ ॡ ए ऐ ओ औ ऽ
ঌ ৡ এ ঐ ও ঔ ঽ

---

व्यञ्जनवर्णाः ।

क ख ग घ ङ, च छ ज झ ञ,
ক খ গ ঘ ঙ, চ ছ জ ঝ ঞ,

ट ठ ड ढ ण, त थ द ध न,
ট ঠ ড ঢ ণ, ত থ দ ধ ন,

प फ ब भ म, य र ल व श
প ফ ব ভ ম, য র ল ব শ

ष स ह क्ष ।
ষ স হ ক্ষ ।

ड़ ढ़ ं ः ँ ।
ড় ঢ় ং ঃ ঁ ।

परिचयः।

ॡ आ ॠ ई ऐ औ अ ऊ इ

ऌ उ ए ऋ।

क ष ख स थ ग ह ङ श न

च व छ ल ज र झ य द म

ट भ ठ ब ड फ ढ प ण त

कं खं गं दं नं पं फं लं हं

कः गः चः दः नः शः सः षः हः

१ २ ३ ४ ५ ६ ७ ८ ९ ०

१ २ ३ ४ ५ ६ ७ ८ ९ ०

— = ≡ |० ||० |||० |

। ७ ७ |० ||० ५० |

साङ्केतिकचिह्नाः।

, ; : . ? ! - — + = ÷

( ) [ ] “ ” ‿

वर्णसंयोजनम्।

हर जय सम धन कथ

अव जल तव छद तप

लग मन हय वध वद

कवल चपल लपन आनन मनसः॥

उदय अभय वरतः नखद शयनं॥

अतएव शशधर दशरथ अभयम् ॥

कलरव एकशफ उपवन भजनम् ॥

---

रूपान्तरे स्वरसंयोगः ।

ा ि ी ु ू ृ ॄ ॢ

া ি ী ু ূ ৃ ৄ ৢ

े ै ो ौ

ে ৈ ো ৌ

का कि की कु कू कृ कॄ कॢ

কা কি কী কু কূ কৃ কৄ কৢ

के कै को कौ ।

কে কৈ কো কৌ ।

कथा किल हीनः भुवि दूरः दृढः

ऋजुः क्लृप्तः काले मैव कोल विभौ

अपकारः चिरस्थित परायत्त जीवनम्

ऋजुपाठः गूढभावः सभासद वृजिनम्

क्-य-क्य । ग्-य-ग्य ।

क्य ख्य ग्य घ्य ङ्य च्य छ्य ज्य झ्य ञ्य

ক্য খ্য গ্য ঘ্য ঙ্য চ্য ছ্য জ্য ঝ্য ঞ্য

ट्य ठ्य ड्य ढ्य ण्य त्य थ्य द्य ध्य न्य

ট্য ঠ্য ড্য ঢ্য ণ্য ত্য থ্য দ্য ধ্য ন্য

प्य फ्य ब्य भ्य म्य य्य ल्य व्य श्य ष्य

प्‍य फ्‍य ब्‍य भ्‍य म्‍य य्‍य ल्‍य व्‍य श्‍य ष्‍य

स्य ह्य क्ष्य ॥

स्‍य ह्‍य क्ष्‍य ॥

उपाध्याय इवायासम् । सख्यमन्योन्यस्य ।

अवसायोभविष्यासिं । सिध्यतारामिवख्याताम् ।

नावैत्याप्यारयितम् । दूतोऽयं मानुषस्येति ।

रावणस्य लुलाव यः । खादिष्याम इति ।

वानरान्प्रत्युवाच सा। पूज्याधन्यामान्याशिष्याः।

केनापि विजेतुमस्या । तस्याधिकस्योपमयो ।

---

क्-र-क्र । प्-र-प्र ।

ख्र ग्र घ्र ज्र ड्र ढ्र ल्र द्र ध्र न्र प्र

ख्‍र ग्‍र घ्‍र ज्‍र ड्‍र ढ्‍र ल्‍र द्‍र ध्‍र न्‍र प्‍र

ब्र भ्र म्र व्र श्र स्र ह्र ॥

ब्‍र भ्‍र म्‍र व्‍र श्‍र स्‍र ह्‍र ।

सुग्रीवो वालिभानुम् । द्रुतं भ्रमति मेदिनी ॥

वालिनो दूरमाग्रामो । प्रीयतां श्रीपतेप्रभो ॥

वाणं प्राणादत्यजम्। शरैरजस्रं कुसुमायुधस्य

चन्द्रेयसीचन्दनवासिता॥ तापेन भ्रंश्यते रूप

र्-क-र्क । र्-ग-र्ग ।

र्क र्ख र्ग र्घ र्च र्छ र्ज र्झ र्ट र्ठ र्ड र्ढ र्ण

र्क र्ष र्ग

र्त र्थ र्द र्ध र्न र्प र्फ र्ब र्भ र्म र्य र्ल

र्व र्श र्ष र्स र्ह र्च ॥

मञ्जीरं स्वाक्षिषं सर्पिः । प्रावृड्वर्षुक्ष्वगाजिनम् ॥
तथापि क्रियां पथ्यास् । हर्षनाल्पकृतात्म जः ॥
समर्थोपिसीतादर्शन । नाकार्षं देवि विक्रमम्॥
वर्द्धमानोहरि दुर्गमास्। मूर्खाणां कर्कशःवचः ॥

क्-न-क्न । त्-न-त्न ।

क्न ग्न घ्न त्न थ्न ध्न न्न प्न म्न

क्न ग्न घ्न त्न थ्न ध्न न्न प्न म्न

श्न ष्ण स्न ह्न क्ष्ण ।

श्न ष्न स्न ह्न क्ष्न ।

ज्योत्स्नास्तं शशी यस्यास् । व्यश्नुवाना दिग्नः ॥
व्यर्थे यत्ने च पौरुषे । हेम रत्नमयी स्रगः ॥

स्-म-स्म । न्-म-न्म ।

क्म ग्म ङ्म ट्म ण्म त्म द्म ध्म न्म

क्म ग्म ङ्म ट्म ण्म त्म द्म ध्म न्म

प्म स्म ल्म श्म ष्म त्म ह्म क्ष्म ।

प्म ष्म ल्म श्म व्म न्म म्म स्म ।

आत्मपक्षं परित्यज्य। सुमित्रा सह लक्ष्मणेन॥
प्रधाने सौधसद्मनः। श्मशानवासिनो शिवा॥

क्-ल-क्ल। ग्-ल-ग्ल।

क्ल ग्ल प्ल म्ल श्ल ह्ल।
क्ल ग्ल प्ल म्ल श्ल ह्ल।

दम्भसारान्नःस्नेहाच्च। श्लक्ष्णचूर्णीकृतं तेषाम्॥
नृपात्मजौ चिक्लिशतुः। आह्लादो ग्लानिनाशकः॥

क्-व-क्व। त्-व-त्व।

क्व ग्व घ्व ज्व ड्व ढ्व ण्व त्व थ्व
द्व ध्व न्व प्व ब्व भ्व म्व य्व ल्व व्व श्व
ष्व स्व ह्व च्व।

विश्वासप्रदाभरणानि। जाम्बवन्नीलसहितम्॥
साध्वनुक्रीडमानानि। क्व तत्त्वं विह्वलं मनः॥

ङ्-क-ङ्क। ष्-ट-ष्ट।

ङ्क ङ्ख ङ्ग ङ्घ। ञ्च ञ्छ ञ्ज ञ्झ
ङ्क ङ्ख ङ्ग ङ्घ। ञ्च ञ्छ ञ्ज ञ्झ।

ष्ट ष्ठ ण्ड ण्ढ ष्ण। न्त न्थ न्द न्ध न्न।
ष्ट ष्ठ ण्ड ण्ढ ष्ण। न्त न्थ न्द न्ध न्न।

म्प म्फ म्ब म्भ म्म॥
म्प म्फ म्ब म्भ म्म।

प्रियङ्गुरश्मसिन्दूरञ्च। कुङ्कुमं चन्दनं लाक्षा॥
व्यङ्गजिद्गन्धमाल्यञ्च। जिगाय तस्य हृत्तारम्॥

म्-क-ङ्क। ग्-च-ञ्च।

ष्क स्क ष्ख स्ख ङ्ग ह्व। श्च श्छ
ষ্ক স্ক ষখ স্খ ঙ্গ ঙ্ঘ। শচ শছ

ञ्ज ब्झ ज्ञ। ष्ट ष्ठ ड्ड ड्ढ स्त।
ঞ্জ ঞ্ঝ জ্ঞ। ষ্ট ষ্ঠ ণ্ড ণ্ঢ ন্ত।

न्थ न्द न्ध। ष्प स्प ष्फ स्फ।
ন্থ ন্দ ন্ধ। ষপ ম্প ষ্ফ স্ফ।

दृष्ट्वा सेने न सुग्रीवो। संवल्प्य लाञ्छिके वल्ले॥
ओष्ठाग्रैर्विमृह्यामोले। तत्पूर्वैः पालितं पूर्वम्॥

ल्-क-ल्क। ल्-प-ल्प।

ल्क ल्ग ल्ट ल्प ल्फ ल्भ ल्म।
লক লগ লট ল্প লফ লভ লম।

नागरञ्चाथ कल्काभ्याम्। क्लीवानामल्प शुक्लाः॥
वातगुल्ममुदावर्त्तम्॥

क्क क्ख ग्ग ग्घ ग्द च्च च्छ ञ्ञ ज्ज ज्झ ट्ट ट्ठ
ক্ক ক্খ গগ গঘ গদ চচ চছ চঞ জ্জ জঝ ট্ট টঠ

ठ्ठ ड्ड ड्ढ ण्ण त्क त्त त्थ त्प त्स द्द द्ध
ঠঠ ডড ডঢ ণ্ণ ত্‌ক ত্ত ত্থ ত্‌প ত্‌স দ্দ দ্ধ

द्भ प्त प्प प्फ ब्ब भ्भ म्म म्प्र ल्ल स्स।
দ্ভ পপ পফ গ্ন প্‌স ব্‌ভ শ্‌শ ক্স স্‌স।

यावज्जीवं सुखेन यापयति। एतच्चूर्णीकृतं स्वच्छम्॥ प्रागभुक्तमथवा पेयम्। लक्ष्मी मर्च्चय वस्त्रेण॥

ङ्क्य ङ्ख्य ङ्ग्य ङ्घ्य न्त्य न्थ्य न्ध्य न्न्य म्ब्य ग्भ्य

ङ्क्या ङ्ख्या ङ्ग्या ङ्घ्या न्त्या न्द्या न्ध्या न्न्या म्ब्या ङ्वा

च्च्य च्छ्य त्त्य त्थ्य द्ध्य त्य द्य त्म्य त्र्य।

ङ्क्ता ङ्ख्ता ङ्क्या ङ्ग्या ङ्घ्या ङ्क्ला न्द्या ङ्ग्या ङ्क्या।

दौरात्म्यमहं ते नास्ति। नलंविलङ्घ्यतरम्। विबुधैर्न्न दृश्यते। एतद्व्याधि समूहस्य॥

त्ता द्ध्व च्छ्र म्भ्र म्भ्म ह्न ङ्क्ष स्त्न न्त्व न्द्र ग्भ्र

ङ्क द्ध्रु च्छ्रृ म्प्र ङ्ग्र द्ध्रृ ङ्क्रृ ङ्ख्र न्त्र ङ्ग्र ङ्क्रृ

न्त्व ङ्क्ष्ण ङ्क्ष्र त्म ह्ल च्छ्रु ज्ज्व न्त्व ह्व ह्ल न्त्व

त्र ङ्ग्रृ ङ्क्लृ त्प्र द्ध्व च्छ्लृ ज्ज्वॄ त्लृ म्र ङ्क्ष तॄ

न्द्व ङ्व ह्व स्त्व ष्क्र ह्व ष्ण।

न ङ्कॄ ङ्खु क्र ङ्क्ष ष्प्र।

कस्त्वमिदानीं क्वच गच्छसि। उज्ज्वलं निर्म्मलं तत्त्वम्। पीवैच्छासोहिक्कोच। भवद्भ्रातरः। कुशलिनःसन्ति। सम्प्रति किमपि कार्य्यमस्ति। हन्तुं ते निष्प्रयोजनम्॥ इत्युक्त्वा सर्व्व एवा सुर्व्विद्वा। लक्ष्म्योऽप्यसौ नोज्झति।

तस्करः पलायते। नर्त्तकी नृत्यति। व्याघ्रो धावति। वृद्धो जृम्भते। फलं पतति। नदी वहति। चन्द्र उदेति। मेघो गर्जति। युवा हसति। बालको रोदिति। शिशुः क्रीडति। पुष्पं शोभते॥



अहं वनं गच्छामि। शिष्यो गुरुं प्रणमति। त्वं चन्द्रं पश्यसि। त्वं कुल गच्छसि। पिता पुत्रम् आह्वयति। सोऽन्नं पचति। राजा प्रजाः पीड़यति। बालकः पुस्तकं पठति। दुर्जनो ऽनिष्टं करिष्यति। त्वं सुगन्धं जिघ्रसि। राजा मन्त्रिं पृच्छति। त्वं कथं क्रीडसि। विद्या विनयं ददाति। वयं जलं पिबामः। इयं लज्जां त्यजति। स नृपं प्रणमति। गुरुःशिष्यम् अध्यापयति। अहं किं करोमि। देवास्तम् ऊचुः। तान् राजा उवाच। ताः विश्वरूपः अब्रवीत्॥



सत्यवादिनं को न विश्वसिति। वयं ताव-द्वातौ न पश्यामः। कोऽपि न पादौ प्रक्षाल-यति। सर्व्वं आलस्ये कालं हरति। कस्तव त्राता भविष्यति। अत्र पूर्णिमादिने समुद्र वेला चरति। येन प्लवुन् स व्यापादयति। त्वां वयं न पृच्छामः। विचार्य्य शीघ्रं कथयन्तुभवन्तः। अस्ति तस्मिन् प्रदेशे महाग्रामो। त्वं देहि मे प्रतिवचनम्। स स्नानार्थं नद्यां यास्यति। दु-र्गस्थो दुःसाध्यो रिपुर्भवति। साम्प्रतं त्वं पाशविमोचनं कुरु। अहो न सत्यमभिहि-भवता। अहं ते पुस्तकं दास्यामि। भो न युक्तमुक्तं भवता। तत् कथ्यतां ममाग्रे सत्यम्। तेनात्मानः सर्व्वं वृत्तान्तं कथितम्। स दुष्टं देशं जगाम। सवित्तं दण्डकाष्ठेन चखान तं क्लिश्यमानम इन्द्रोऽपश्यत्।



ते समेत्य मिथो मन्त्रं चक्रुः। अहं स्नानं कृत्वा देवार्च्चनं करिष्यामि। नूनंवानरवसया अस्मानां

वह्निदाहदोषः प्रणश्यति। अहं त्वदीयं मठं त्यक्त्वान्यत्र यास्यामि। स सदा सुखेन कालं नयति। यत्नेन विना विद्या न भवति। पुरा द्रोणपुत्रेण प्रसुप्तोधृष्टद्युम्नः हतः। अहं तव पार्श्वे गुरुकार्य्येण समायातः। त्वया नातः स्थानात् क्वापि गन्तव्यम्। प्रातःकालेऽयं नित्यमेवागत्य मां पीडयति। त्वमपि तं स्वजातीयं रिपुं युद्धेन परिभूय। अयं तव पुत्त्रो मे पुरोहितोऽस्तु। त्वं पुनः स्वेच्छयागीतं कुरु। किं दृष्टं भवता तत् सत्यम्।



उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
शृगालेन हतोहस्ती गच्छता पङ्कवर्त्मना॥

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती तमवलोक्य सर्वे शृगालाः चिन्तयन्ति स्म। यद्यऽयं केनापि उपायेन म्रियतेतदास्माकम् एतद्देहेन मासचतुष्टयस्यभोजनंभविष्यति॥

तत एकेन वृद्धशृगालेन प्रतिज्ञातं मया बुद्धि-प्रभावात् अस्य मरणं साधयितव्यम् ।

अनन्तरं सवञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्य, उवाच देव दृष्टिप्रसादं कुरु । हस्ती ब्रूते कस्त्वं कुतः समायातः। सोऽवदत् जम्बूकोऽहम्। सर्वैः वनवासिभिः पशुभिः मिलित्वा भवत् सकाशम् अहं प्रस्थापितो यद्विनाराज्ञा अवस्थातुं न युक्तम् । तदत्र अटवीराज्ये सर्व्वस्वामिगुणोपेतो भवान् अभिषेक्तुं निरूपितः ॥

ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकशृगाल वर्त्मना धावन्महापङ्के निमग्नः। ततः तेन हस्तिना उक्तं सखे किम् अधुना विधेयं पङ्के निपतितोऽहं म्रिये परावृत्य पश्य । एतच्छ्रुत्वा शृगालेन विहस्योक्तं सखे मम पुच्छावलम्बनं कृत्वा उत्तिष्ठ यस्मात्मत्विधस्य वचसि प्रत्ययः कृत तद् अनुभूयतां दुःखं लोभञ्च। ततो महापङ्के निमग्नो हस्ती शृगालैः भक्षितः ।

उपदेशो न दातव्यो यादृशे तादृशे जने ।
पश्य वानरमूर्खेण सुगृही निर्गृही कृता ॥

अस्ति नर्म्मदातीरे विशालः शाल्मलीतरुः। तत्र निर्मितनीडक्रोड़े पक्षिणो निवसन्ति । अथैकदा वर्षासु नीलपटलैः आवृते नभस्थले धारासारैः महती वृष्टिर्बभूव । ततो वानरांश्च तरुतले अवस्थितान् शीताकुलान् कम्पमानान् अवलोक्य कृपया पक्षिभिरुक्तम् । भो भो वानराः शृणुताम् । चञ्चुमात्राहृतैः तृणैः अस्माभिर्नीड़ा निर्मिता । परं हस्तपदादियुक्ता युयं किमिति सीदथ । एतद् श्रुत्वा वानरैरालोचितम् अहो निर्वातनीड़ क्रोड़स्थिताः सुखिनः पक्षिणोऽस्माकं निन्दन्ति । भवतु तावद्वृष्टेरुपशमः । अनन्तरं शान्ते पानीयवर्षे तैर्वानरैः वृक्षं आरुह्य सर्व्वे नीड़ा भग्नास्तेषाम् अण्डानि च अधःपातितानि ॥

⸻

उपायेन हि तत्कुर्य्याद्यन्न शक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ॥

अस्ति नर्मदातीरे महान् वटवृक्षः। तत्र वायसदम्पतीकृताश्रयौ प्रतिवसतः । अथ तयोः प्रसवकाले तद्वृक्षकोटरान्निष्क्रम्य कृष्ण सर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ दुःखात् अन्यवृक्षमूलनिवासिनं प्रियसुहृदं गत्वा शृगालं ऊचतुः। भद्र किमेवंविधे सञ्जाते आवयोः कर्त्तव्यं भवति। एष दुरात्मा कृष्णसर्पो वृक्षविवरान्निर्गत्य आवयो र्बालकान् भक्षयति। तत्कथ्यतां तद्रक्षार्थं कश्चित् उपायः।

सर्पयुक्तगृहे वासो मृत्युरेव न संशयः।
यद्ग्रामान्ते वसेत् सर्पस्तस्य स्यात्प्राणसंशयः ॥

अस्माकमपि तत्र स्थितानां प्रतिदिनं प्राण संशयः। एतच्छ्रुत्वा शृगालः प्राह। नूनं स क्षुद्रो नोपायं विना वध्यः स्यात्।

उपायेन जयो यादृक् रिपोस्तादृक् न हेतिभिः ।
उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥

ततो वायस आह । भद्र तत्कथय कथं स दुष्टोसर्पो बधम् उपेष्यति। शृगाल आह । गच्छतु भवान् किञ्चिन्नगरं राजाधिस्थानम्। तत्र कस्यापि धनिनो राजामात्यादेः कनक-सूत्रं हारं वा गृहीत्वा वृक्षकोटरे प्रक्षिप । येन स सर्पः सुखेन बध्यते । अथ काक काकी च तत्क्षणात् उड्डितौ कस्मिंश्चित्पुरे प्राप्तौ ततश्च काकी उपवनमध्ये गत्वा यावत् पश्यति, तावत् कस्यचिद्राज्ञोऽन्तःपुरं जला सन्नान्यस्तकनकसूत्रहाराभरणं जलक्रीडां करोति । अथ सा वायसी कनकसूत्रमेकम् आदाय स्ववृक्षाभिमुखं प्रतस्थे । ततश्च कञ्चु किनो वर्षधराश्च तन्नीयमानमुपलभ्य गृहीत-लगुडहस्ताः सत्वरम् उपययुः । काक्यपि सर्प कोटरे तत् कनकसूत्रं प्रक्षिप्य सुदूरतरमव-स्थिता । अथ यावत् राजपुरुषा स्तं वृक्षम्

आरुह्य तत्कोटरम् अवलोकयन्ति। तावत् कृष्णसर्पः प्रसारितभोगस्तिष्ठति। ततः तं लगुडप्रहारेण हत्वा कनकसूत्रम् आदाय यथाभिलषितं स्थानं गतः। वायसदम्पत्यपि ततः परं सुखेन वसतः स्म॥

---

किं तया क्रियते धेन्वा या न सूते न दुग्धदा।
कोऽर्थपुत्त्रेण जातेन यो न विद्वान् न भक्तिमान्॥

यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्व्वन्ति चञ्च्वा स्वोदरपूरणम्॥

वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम्।
स्थायिभवति चात्यन्तं रागःशुक्लपटे यथा॥

अस्तं शिशिरे वह्निरमृतं प्रियदर्शनम्।
अमृतं राजसन्मानम् अमृतं सङ्गतिःसताम्॥

सर्पाणाञ्च खलानाञ्च परद्रव्यापहारिणाम्।
अभिप्राया न सिद्ध्यन्ति तेनेदं वर्त्तते जगत्॥

जातमात्रं न यः शत्रुं रोगं च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते॥

उपदेशोहि मूर्खाणां प्रकोपाय न शान्तये ।
पयः पानं भुजङ्गानां केवलं विषवर्द्धनम् ॥

मातृवत्परदाराणि परद्रव्याणि लोष्ठवत् ।
आत्मवत्सर्वभूतानि वीक्षन्ते धर्मबुद्धयः ॥

विद्वत्वं च नृपत्वं च नैव तुल्यकदा च न ।
स्वदेशे पूज्यते राजा विद्वान् सर्व्वत्र पूज्यते ॥

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥

विधात्रा रचिता रेखा ललाटेऽक्षरमालिका ।
न तां मार्जयितुं शक्तः स्वबुद्ध्याप्यतिपण्डितः ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे
विश्रम्भस्तादृशः पुंसां यादृग्मित्रे निरन्तरे ॥

प्राप्ते भये परित्राणं प्रीतिविश्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥

वृक्षांश्छित्वा पशून्हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥

## नीतिवाक्यम् ।



पण्डितेच गुणाः सर्वे मूर्खे दोषाहि केवलम् ।
तस्मान्मूर्ख सहस्रेषु प्राज्ञएकोविशिष्यते ॥

नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्व्वस्व भूषणम् ॥

माताशत्रुः पितावैरि येन बालो न पाठितः ।
सभामध्ये न शोभन्ते हंसमध्ये बको यथा ॥

वरमेको गुणीपुत्त्रो नच मूर्खशतैरपि ।
एकचन्द्रस्तमोहन्ति नच तारागणैरपि ॥

लालयेत्पञ्चवर्षाणि दशवर्षाणि ताडयेत् ।
प्राप्तेतु षोडशेवर्षे पुत्त्रं मित्त्रवदाचरेत् ॥

एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्व्वं सुपुत्त्रेण कुलं यथा ॥

एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दह्यते तद्वनं सर्व्वं कुपुत्त्रे ण कुलं यथा ॥

दुर्ज्जनः परिहर्त्तव्यो विद्ययालङ्कृतोपि सः ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥

नदीनाञ्च नखीनाञ्च शृङ्गिणां शस्त्रपाणिनाम्
विश्वासो नैव कर्त्तव्य स्त्रीषु राजकुलेषु च ॥

हस्तिहस्तसहस्रेण शतहस्तेन वाजिनः ।
शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः ॥

कोकिलानां स्वररूपं नारीरूपं पतिव्रता ।
विद्यारूपं कुरूपाणां क्षमारूपं तपस्विनाम् ॥

अविद्यजीवनं शून्यं दिक् शून्याच बान्धवाः ।
पुत्त्रहीनं गृहं शून्यं सर्व्वशून्या दरिद्रता ॥

अतिदर्पे हतालङ्का अतिमानेच कौरवाः ।
अतिदाने बलिर्बद्धः सर्व्वमत्यन्तगर्हितम् ॥

दुर्लभं प्राकृतं वाक्यं दुर्लभः पुत्रपण्डितः ।
दुर्लभा सदृशीभार्य्या दुर्लभः स्वजनः प्रियः ॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो नहि सर्व्वत्र चन्दनं न वने वने ॥

तस्करस्य कुतोधर्म दुर्जनस्य कुतः क्षमा ।
वेश्यानाञ्च कुतः स्नेहःकुतःसत्यञ्च कामिनाम् ॥

श्रीं नमो गणेशाय ।

# अथ हास्यार्णव

नामक

## प्रहसनम् ।

खेद स्यन्दित सान्द्र चन्दनचयं दोर्वल्लिबन्ध
माद्दर्श्वास परिस्खलत् स्मरकथं सन्दष्ट दन्तच्छदम्

---

रङ्गस्य विघ्नोपशान्तये नान्दीविधेया ।
च चतुर्थी ननस्कृतिर्माङ्गलिकी आशीः ॥
वावली संज्ञाभेदेनात्रमाङ्गलिकी नान्दी ।
वस्यार्द्धेन्दुचूड़स्य विलासेनोपवर्णिता ॥
ङ्गलानुगतं वाक्यं यत्रमाङ्गलिकीति सेति नियमेन ।
ङ्कस्यशङ्खचन्द्राब्ज कोक कैरवशंसिनी ॥
पदैर्युक्ताद्वादशभिरष्टाभिर्वापदैरुतइति प्रमाणात् द्वितीय
ोके इन्दुशब्दो नियुक्तो ग्रन्थकता इति बोद्धव्यमत्राप्यष्टपदा
न्दी।

श्लोकस्यार्थः ।

खेदस्यन्दितेन घर्मक्षरणेन सान्द्रोगाढ़ः कर्द्दमवत्
विड़श्चन्दनचयोमलयजनिकरो यस्मिन् तत्तयोक्त दोर्षौ
सौ वल्लर्यौ लते इवेत्युपमित समासः। घर्मो निदाघः

शीत्काराञ्चितलोचनं सपुलकं भ्रान्तभ्रुटत्यत्करं
पार्व्वत्यां सुरतं मुदे रसवतामास्तां मृड़ानीपतेः॥१

अपिच।

स्वर्भानुःसुरवर्त्मनानुसरति ग्रासाभिलासाद्यदिन्दो
रिन्दुमुखि ग्रसेत किमुत भ्रान्तया भवत्यामुखम्।

---

खेदःस्यादिति भुजबाहू प्रवेष्टोदोरिति चामरः। तयोर्बन्धे बन्धनेयः श्रमस्तस्मादूर्द्ध्वश्वासपरिस्खलत् स्मरकथम् ऊर्द्ध्वश्वासेनोच्चै र्निश्वासेन परिस्खलन्ती अस्फुटवाक्यं कथयन्ती स्मरस्य कामदेवस्य च कथा यत्र तत् तयोक्ता सन्दष्टदन्तच्छदं सन्दष्टौ चुम्बिताविन्त्यर्थःदशनच्छदारोष्ठाधरौ यत्र ओष्ठाधरौ तु रदनच्छदौ दशनवाससी इत्यमरः। अतएवशीत्काराञ्चितलोचनं शीत्कारणशीदित्यव्यक्त शब्देनाञ्चिते निमिलीतेलोचने यत्र तत् सपुलकं सरोमाञ्चञ्च एवं भ्रान्त भ्रुभ्रान्ते भ्रमन्तीभ्रुवौ यत्र न्त्यत्करं क्रीड़त्करं यत्र तदा हस्तादिकम्पमानेन तयात्वारोपः। तत् मृड़ानी पतेर्महादेवस्य पार्व्वत्यानुमायां सुरतं शृङ्गारोरसवतां रसिकानां मुदे आनन्दाय आस्तां भवत्विितिशेषः।(१)

त्रिनयनोमहादेवः सतां सज्जनानाम् इष्टसिद्धैय वाञ्छितार्थाप्तये स्यात् भवत्वित्यन्वयः। किम्भूतः मानिन्या भवान्याः पार्व्वत्या वक्रो भ्रमनभ्यर्थम्वारम्बारमिति यावत् क्षतःचुम्बनःक्षतश्चुम्बनो येन सः। पार्व्वत्याः किदृश्याः हे इन्दुमुखि चन्द्रवदने। इन्दोश्चन्द्रस्य ग्रासाभिलासात् केवलाभिलासेन स्वर्भानूराहुः सुरवर्त्मना अनुसरति गच्छति उत वितर्के भ्रान्त्या इन्दुभ्रान्त्या असौ स्वर्भानुः

इत्थं नाथगिरा नभोर्पितदृशो वक्त्रे भवान्या सस्मितं
मानिन्याःकृतचुम्बनस्त्रिनयनःस्तादिष्टसिद्धैरसताम्॥ १

नान्द्यन्तेसूत्रधारः[२] ।

अलमतिविस्तरेण ।[३] यस्य ।

हास्य प्रस्फुटदन्त मौक्तिकचय छाया मनोज्ञानना
नानालङ्कृति[४] सत्कृता रसवतां चित्तप्रमोदस्थली ।
सच्छन्दं वरवर्णिनी[५] रसवती सीमन्तिनीव[६] स्वयम् ।
स्या श्री जगदीश्वरस्य[७] कविता सच्चित्त[८] मानन्दयेत्॥

अस्ति च तस्य कवे र्निजकुल कमल प्रकाशक दिनकरस्य त्रिपुरहर चरण प्रणाम चन्द्रमः प्रकाशित कवित्व कैरवस्य[९] मामृप्रति निदेशः । त्वमिह

---

भवत्या मुखं किं पश्येत इत्यहं शङ्के इति शेषः। इत्थम् एवम्प्रकार नाथगिरापतिवचसा नभोर्पितदृशो नभसि आकाशे अर्पितौ दृशौ यया तस्याः।(१)

उक्त प्रकारा नान्दी रङ्गद्वारात् प्रथमं नटैरेव सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रित इति नियमात् महाकवि प्रबन्धेषुयच्च पश्चान्नान्द्यन्ते सूत्रधार इति लिखनं दृश्यतेतस्याय मभिप्रायः नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति ।(२)

अति विस्तरेणातिशयबाहुल्येनालं व्यर्थम् ।(३)

सिमन्तिनी विशेषणम् ।(४) उत्कृष्टा।(५) वधूरिव।(६)

एतद्ग्रन्थकर्त्तुः(७) सतांचित्तम् ।(८) कुन्दस्य ।(९)

सुरभि[१] समयोचितेनास्मद्विरचितेन हास्यमहार्णव-नाम्ना प्रहसनेन[२] विदग्धसमुदायानां[३] हृदयानन्द मुत्पादयेति । अवश्यमेतत् शासन मनुष्ठेयम् । यतो विदग्धजनमण्डितायां संसदि रसवत्या वाचा विलसितुं नर्त्तितुञ्च ममापि चित्त कौतूहल मस्ति अत स्तत् संगीतक मवतारयामि ॥

परिक्रम्यावलोक्य च ।

अहो कुसुमसमय[४] रमणीयता चेतो हरति ।

यतः ।

चञ्चति चन्दन पवने ध्वनतिच मधुमत्त मधुव्रते मधुरम्
कूजति कोकिल निकरे न हरति सुरभि[५] र्मनः कस्य॥

अन्यच्च ।

उड्डीयते स्खलति गुञ्जति कुञ्जमध्ये

---

वसन्तः।(१)

तल्लक्षणं भाणवत्सन्धि सन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम् ।
भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ॥
अत्र नारभटीनापि विष्कम्भक प्रवेशकौ ।
वृत्तं बहूनां भ्रष्टानां सङ्कीर्णं केचिदूचिरे ॥
तत् पुनर्भवतिद्व्यङ्कमथवैकाङ्कनिर्मितम् ।
इति नियमादेवमन्यकृताद्व्यङ्क एवमन्यः कृतः (२)।

पण्डितसमूहानाम् ।(३) वसन्तसमयः ।() वसन्तः ।(५)

पुष्पाणि चुम्बति परिष्वजते[1] द्विरेफीन्।
घूर्णन् भ्रमत्यपि पराग[2] विधूषराङ्गो[3]
भृङ्गोद्य किं न कुरुते मधुपानमत्तः॥

तत्कथमत्र ललनाम्बिना विनोदः।
परिक्रम्यनेपथ्याभिमुखं[4] पठति।

शृङ्गारसत्त नलिनी दलसत् कटाक्षे
पीयूषरश्मि वदने मदनेषुतुल्ये।
कन्दर्पसर्पपरिदष्ट सुधे विदग्धे[5]
स्निग्धे प्रिये त्वरित मागमनं विधेहि॥

प्रविश्य नटी॥

अज्जउत्त एसम्हि दे आण्णा णियोयेण समायदा
।। अणुग्गह वअणं पसादीकरी अदु।[6]

सूत्रः॥ आर्य्ये पश्य॥

आशासु[7] प्रसरन्ति कोकिल कलस्वनो[8] निकुञ्जान्तरे

---

आलिङ्गति।(१) पुष्परजः(२)
पाण्डुविग्रह (३) सन्मुखम्।(४)
नेपथ्यं नाट्यशालायां नेपथ्यञ्च विभूषणे इत्युक्ते नाट्यशाला
जवनिकान्तर्भूमिरिति यावत् तस्याभिमुखं पठति(५)
आर्य्यपुत्रएषास्मिते आज्ञानियोगेन समागतातस्मादनुग्रहवचनं
प्रसादीकुरु।(६) दिक्षु।(७) गभीरशब्दाः(८)

गुञ्जन्तो भ्रमराः समुत्कमनसः[1] चुम्बन्ति पुष्पावलीम्
स्पर्शात् सारित मल्लिका परिमलः[2] श्रीखण्डवायु[4]
र्वहे[?]दित्थं कं न करोत्ययं स्मरशराक्रान्तं[5] वसन्तोदय.

अन्यच्च ॥

दृष्टान्यपुष्ट[6] मधुरध्वनिभिर्नवोढ़ा[7]
मध्यापयेदेव सुमाधविका लतेयम् ।
आलिङ्ग्य चूत मसकृत् कलकण्ठशब्दं
नूत[8] प्रसून पुलकं कुसुमागमेस्मिन् ॥

नटी । किञ्चिदन्यचित्ततां नाटयति ।

सूत्र: । आर्यै किमित्यन्यचित्तासि ।

नटी । णसुणिदं अज्जउत्तेण[9] ।

सूत्र: । किन्तत् ।

नटी । अज्ज अज्जेव णिम्मज्जा अन्तउर वासिणा अणअ सिन्धुणा णरवइणा मण्डल वि आरणा काद्व्वातेण अणु चित्तह्मि ।[10]

---

उन्मनसः ।(१) पुष्पश्रेणीम् ।(२) जनमनोहरगन्धः ।(३)
मलयवायुः ।(४) मदनशराग्रस्तम् ।(५) कोकिलः ।(६)
नववधुम् ।(७) नूतनम् ।(८) नश्रुतम् आर्यपुत्रेण ।(९)
अर्य्यआद्यैवनिमग्नअन्तःपुरवासिना अनयसिन्धुनानरपतिनामण्डल विचारणाकर्त्तव्यातेनअन्यचित्तास्मि। (१०)

सूत्र:। कान्ते किमेतत् सत्यम्।

नटी। अथ इं।[1]

नेपथ्ये।

घटयत घटजालं तोयशून्यं पुरस्तात्
पथि तुष नखलेखा क्षिप्यतां भो नियुक्ताः।
निज पुर परिचर्य्यां कर्त्तुमेवायमुत्को
नृपतिरनयसिन्धु स्तूर्ण[2]मागच्छतीह[3]।

सूत्र। आकाशे कर्णं दत्वा आकर्णय च।

नीति र्भीति मतोदिगन्त मभजत् क्षिप्रं समं
साधुभि र्धूर्त्तानां पटुतापरं परधना कृष्टं न केषां मनः
कान्ता कस्य वलान्नकेन रमिता राज्ये यदीयेऽधुना
तस्य क्षौणिपतेः समागति[4]रिह स्यातुं न युक्तं प्रिये।

तदितोन्यत्रगच्छाव इति निस्क्रान्तौ।

इतिप्रस्तावना॥[5]



ततः प्रविशति सानुचरो नरपति रनयसिन्धुः

अथकिम्।(१) शीघ्रम्।(२) संसदि।(३) समागमनम्।(४)
प्रस्तावना लक्षणं यथा। नटी विदूषको वापि पारिपार्श्विक एव वा। सूत्रधारेण सहिताः संलापं यत्र कुर्व्वते। चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षिपिभिर्मिथः। आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा।(५)

## प्रहसनम् ।

राजा । स्वगतं[1] । अहोदुर्दैवं[2] कुसुम शर शर निकर जर्जर शरीरेण रात्रिन्दिवं परवनिता निधुवन[3] विलीनमनसा कियत्कालं पौरपरिचर्य्या न कृतेति प्रस्तुतिः ।

प्रकाशम् ॥[4]

अये चरश्रेष्ठ ! अयथार्थवादिन् निरूप्यतां तावन्मण्डलम् ।

चरः। जं देओ आणवेदि[5] इति निष्क्रम्य समन्तादवलोक्य च पुनः प्रविश्य नृपकर्ण समीपे उच्चैः । देओ जाणिद मण्डल रहस्सम् ।[6]

राजा । कथय कथय ।

चरः । चिरआलं अविआलणाए मण्डले सव्वोव्वेव ववाहारो अत्तं गदोत्ति ।[7]

---

स्वगत लक्षणन्त अश्राव्यं खलु यद्वस्तुतदिह स्वगतं मतम् ।(१)

दुरदृष्टम् ।(२) शृङ्गारः।(३)

सर्व्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितमिति ।(४)

देव यदाज्ञापति ।(५) देवज्ञातम्मण्डल रहस्यम् ।(६)

व्यवहारो ग्रस्तं गत इति।(७)

राजा। सक्रोधं। कुतः।

चरः। संस्कृतमाश्रित्य देव यतः। आलिङ्गन्ति निजाङ्गनां परवधूं हित्वा जनाः साम्प्रतं नीचः सीव्यति सत्युपानह महो सद्ब्राह्मणानां गणे। वन्दन्ते द्विज सन्तरजे निवसति व्रीडाविहीनाजना एवं मण्डल वैपरीत्य मधिकं जातं महाभूपतेः॥

अपिच॥

नारीणां नयनेऽञ्जनं नजघनेसिन्दूरता मुण्डिते सीमन्ते नच नूपुरौ पदयुगे यावोपि नैवेक्षणे। वक्षोजे मणिमञ्जरी न चरणे काञ्चीकटौ नाधरे चेत्थं वेशविपर्य्ययः प्रतिगृहं दृष्टः सकष्टं मया।

राजा। आकर्ण्य आत्मगतम्।

चिरकाला द्विचारणया अयमव्यवहारो जातः पौराणां भवतु दण्डं विधास्यामि

प्रकाशम्।

अये आहूयतां कुलतिवर्द्धाख्यो मन्त्री।

चरः। जं देओ आणवेदि।[१]

इति निष्क्रम्य तेनसह पुनः प्रविष्टः।

---

यद्देवाज्ञापयति।(१)

प्रविश्य कुमतिवर्म्माख्यो वामपाणिना नृपतिं नमस्कृत्य। अष्टोऽपि सन् प्रस्फुट माज्ञापयतु महाराज किं अनुष्ठेयम्।

राजा। मन्त्रिन् आस्थानोचित[1]स्थानं विना चिर मण्डलचर्च्चा न क्रियते॥

मन्त्री। ससम्भ्रमं देव अत्रैवास्ति च परमरमणीय स्थानम्।

राजा। निवेदय निवेदय।

मन्त्री। वन्धुरायाः कुट्टिन्याः प्राङ्गणम्।

राजा। साट्टहासं कुमतिवर्म्मन् मम चित्तेन[2] सममभिमन्त्र्य संसदि प्रविष्टवानसि यतो देव्या गलित कुचस्पर्शं[3] विमुखस्य वाराङ्गना लिङ्गनाय ममाप्यभिलाषः। यतः उदर पतित स्तनीषु कुतः स्मरावस्थितिः।

तथाच।

उत्तुङ्ग स्तनशैल दुर्ग विषमे वामेक्षणानां[4] हृदि स्थित्वा यत्र बलाद्भिनत्ति हृदयं यूनां[5] सुतीक्ष्णैः शरैः।

---

सभास्थानम्।(१) मनसा सह मन्त्रणां कृत्वा संसदि सभायाम्।(२) स्तनस्पर्शः।(३) स्त्रीणाम्।(४) युवकानाम्।(५)

तस्मिन्मन्मथयुद्ध मर्द्दनवशात् पातं प्रयाते स्तने मन्ये दुर्गपराजयादपसरेद्भीरुः स पुष्पायुधः ।

मन्त्री । तदुपलप्पीवः ।

राजा । सोल्लासं मन्त्रिणासह परिक्रामति । पुरः परिक्रम्य ।

चरः । देओ एत्यज्जेब पूरदो घणदर घणसार सुरहि चन्दण मियणाभि विविह कुसुम परिमल भरोऽपसरदु ता एदं बन्धुराए मन्दिरं तक्केमि इदो अणुसरदु देओ ।[1]

राजा । आङ्गण[2] मनुस्त्य सप्रमोदं इदं बन्धुरायाः प्राङ्गणं प्राप्तं तीर्थशत पर्य्यटनपुण्यम् ।

मन्त्री । इसा बन्धुरा कुट्टिनी ।

ततः प्रविशति[3] भुजङ्गशत परिवेष्टिता बन्धुरा ।

अहो अङ्गुरीयं अङ्गुरीयम् ।[4]

---

देव अत्रैव पुरतो घनतर घनसार सुरभिचन्दन मृगनाभिविविध कुसुमपरिमलो अपसरति तस्मादिदं बन्धुरायामन्दिरमिति तर्कयामि इतो अनुसरतु देव । (१)

चत्तरम् उठान इतियस्य प्रसिद्धिः ।(२)

उपनायकशत । (३)        आश्चर्यं आश्चर्यं ।(४)

ननु रे भुजङ्गा अणयसिन्धुनरवइणो धुत्ताणं चक्कवट्टिणो समागमो वट्टदि ता कधं ताल जुअल झल्ली मद्दण[1] मिलिदाइं वसन्तसमय मुद्दिसिय गीदाइं गाइदुं विलम्बो अदु ।[2]

उपसृत्य भुजङ्गाः सहर्षम् ।

मङ्कमत्त मङ्कव्वत रायुत्त कलकण्ठविलासिणि गाणचय । युअ इक्क विआरण पञ्चसरो तुह भोदु मङ्क व्वङ्कपीदि आरो ॥[3]

इति पुनः पुनर्नाटयति ॥

राजा । आकर्ण्य कर्णौ स्वैरं[4] हे कुमतिवर्म्मन् ! किञ्चिदियं प्रार्थ्यते । ततः कुमतिः । निखिलेजगति महापातकिनो भवन्त एव यत् सर्व्वान् विहायते शिरसि भविष्यति वज्रपातः ।

---

नृत्यगीतवाद्यानामेकत्रस्थानं तालं झिल्लीझांज मर्दनमादन इति प्रसिद्धिः ।(१)

रेतुच्छसम्बोधने भुजङ्गा अनयसिन्धुनरपतेर्धूर्त्तानां चक्रवर्त्तिनः समागमोवर्त्तते तत्कथं तालयुगल झिल्लीमर्द्दनमिति तानि वसन्तसमय मुद्दिश्यगीतानि गातुं विलम्बयतु।(२)

मधुमत्त मधुव्रतगानयुतः कलकण्ठविलासिनी गानचयः । युवचित्त विदारण पञ्चशरस्तव भवतु मधूर्व्वङ्क प्रीतिकरः।(३)

मन्दं यथा स्यात्तथा मन्दस्वच्छन्दयोः स्वैरम् ।

राजा। न ज्ञायते किमेवस्था भविष्यति तदा किञ्चिधेयम्।

मन्त्री। दैन्यं प्रकटी कृत्या नैवोपवासत्रयं विधेय मिति।

राजा। आत्मगतम् अलं भयेन प्रणम्य एनां प्रतारयामि।

(प्रकाशम्।)

मातर्वन्दरे अयमहं प्रणमामि।

बन्धुरा मियङ्क लेहा दे सुप्पसणा ओदु[१]।

राजा। (सहर्ष मात्मगतं) निस्तीर्णोस्मि महा-पातकात् न प्रार्थित मनया किञ्चित्।

राजा। (प्रकाशं) क्व सा मृगाङ्कलेखा।

ततःप्रवशति विशेषालङ्कृत शरीरलतिका मृगा-ङ्कलेखा।

नायिका। सस्मितम् अम्ब को एषः[२]।

बन्धुरा। पुत्ति ण आणासि अणयसिन्धु भूमी-शरो दे दंशन त्थी[३]।

मृगा। (सस्मितं) इदो अहिअं किं पुसम्[४]।

---

मृगाङ्कलेखा ते सुप्रसन्ना भवतु। (१) मातः कोऽएषः। (२) पुत्रि न जानासि अनयसिन्धु भूमीश्वरः तवदर्शनार्थी।(३) दूपङ्खास्वं वया स्वात्तया इतो अधिकं किं पुण्यम्। (४)

राजा । नायिकामवलोक्य अहो आश्चर्य्यमस्याः ।

अज्ञातेन्दु पराभवं परिलसद्द्रागालोलनेत्राञ्जनं भ्रान्त स्फुलत मैणनाभितिलकं[1] श्रीखण्डपत्रालकम् । बन्धूकाधर सुन्दरं सुरमुनि व्यामोहि वाक्यामृतं त्रैलोक्याद्भुत पङ्कजं वरतमोरास्यं न कस्य प्रियम् ।

अपिच ।

अस्या धामसरोवरे[2] भुजविषे[3] वक्त्रारविन्दे
भ्रमन्नेत्र भ्रूभ्रमरे सुयौवनजले कस्तूरिका[4] पङ्किले ।
वक्षोज प्रतिकुम्भि[5] कुम्भदलन[6] क्रोधादुपेत्य द्रुतं
मग्नश्चित्तमतङ्गजः[7] कथमसा वुत्थाय निर्य्यास्यति ॥

(पुनर्बन्धुरा मन्यमनस्कामवलोक्य सस्मेरं वन्धुरे कथमन्यहृदयासि) ।

बन्धु । देश्रो मिअङ्कलेहाए मन्मह्तन्तं अज्झावणत्थं वीसभण्ड उआज्झाओ आगमिस्सदि एदेण । अस्स हि अआ म्हि[8] ।

---

एणनाभि मृगनाभि तिलकम् । (१)

धामसरोवरे देहरूपसरोवरे । गृहदेह त्विट् प्रभावा धामनीत्यमरः । (२) मृणालं विषमजादीत्यमरः ।(३) मृगमद । (४) माया इति प्रसिद्धिः ।(५) हस्ति मस्तमस्थपिण्डः । (६) हस्ती । (७)

देवमृगाङ्कलेखाया मन्मथतन्त्वम् अध्यापनार्थं विश्वभण्ड उपाध्याय आगमिष्यति एतेनान्य हृदयास्मि । (८)

राजा । (सहर्षम्) अस्माकं कुलपुरोहित सएव ।

नेपथ्ये ।

दिनोपवासीतु निशा मिषाशी
जटाधरः सन् कुलटाभिलासी ।
अयं कषायाम्बर चारुदण्डः
शठाग्रणीः[1] सर्पति विश्वभण्डः ॥

(ततः प्रविशति विश्वभण्डः कलहाङ्कुरेण स्नातकेनानुगम्यमानः[2] परिक्रम्य समन्तादवलोक्य च ॥)

अहो अभिनवकुसुमकालो वर्त्तते ।

अपिच ।

कुसुमशर सखोविनोदिबन्धु र्विविध
विलासकलाप कलापधामा ।
मदयति हृदयोन्ययं जनानां
सुरभि रिवा सवसञ्चयः[3] सुगन्धिः ॥

(पुनःस्नातकमवलोक्य पठति ।)

आकाशे प्रसरन्ति तालयुगल स्वाना स झिल्लीरवैः
सर्व्वाशासुखरोध्वनत्य विरतं मन्दं मृदङ्गध्वनिः ।
कर्पूरागुरुगन्धवन्धुरनिलो व्याप्नोति सर्व्वादिशो
गेहे कस्य महोत्सवोद्य नियतं वत्सद्रुतं ज्ञायताम्

---

श्रेष्ठः । (१) छात्रेण । (२)
आसवो मदः । (३)

(परिक्रम्य कलहाङ्कुरः ।) भअवं बन्धुराए कुट्टिणीए णिलए महूसवो वट्टदि[1])

विश्व: । (सहर्षं) वत्स पूर्व्वसम्वत्सरे भोजनार्थं तया निमन्त्रिता वयम् उदय मवसरः ।

(इति परिक्रम्य बन्धुरायाः प्राङ्गणं प्रविष्टः ।)

बन्धु । उअज्झाअस्स एदं भग्गासनं उववसदु अज्जो[2]

विश्व: । (नाम्नोपविश्य ससम्भ्रमं मातर्बन्धुरे प्रणमामि) पुत्त मअण समुद्द सन्तरणं भोदु[3] ।

विश्व: । (नायिकामवलोक्य ।) मदनपयोनिधि-तरणं भवति तदा पीवरकुचकुम्भः । यद्यवलम्बितु मस्या लभ्यत एवैण नेत्रायाः[4] ।

नायिका । सस्मितमालोकयति ।

राजा । (स्वगतं) महामहोपाध्याय विश्वभण्डः । कौलटकुलार्च्चिताया बन्धुराया लब्धाशीर्व्वादः पार्श्वतः समुपविष्टः शुभाशीर्व्वादं संग्रहीतुं प्रकाशं भगवन् प्रणमामि ।

विश्व: । भो कलहाङ्कुर द्रुतं देहि राज्ञे आशीर्व्वादम् ।

---

भगवन् बन्धुरायाः कुट्टिण्यानिलयेमहोत्सवोवर्त्तते । (१)
उपाध्यायस्य इदं भग्नासनम् उपविशत्वार्य्यः । (२)
पुत्र मदन समुद्र सन्तरणं भवतु । (३) मृगनेत्रायाः । (४)

कलहाङ्कुरः। साट्टहासं शक्राशनच्छितं दूर्व्वा-क्षतमादाय संस्कृतमाश्रित्य भङ्ग्या। नेते पुण्यो-दयो भवतु भवताम्।

अपिच।

शत्रोर्वृद्धिर्भियोहिवृद्धिर्व्याधेर्ऋणे[2] नसाम्।
दुर्गते दुःस्थिते वृद्धिः सन्तु ते सप्तवृद्धयः॥

(इति पठित्वा राजशिरसि दूर्व्वाक्षतमर्पयति।)

राजा। भगवन् कोयं दुष्टवटुः।

विश्वः। अयमविदितो भवता।

निजवंशधूमकेतुर्भृश मघसेतुः प्रमादचयहेतुः।
परवित्तहरणाङ्कुरः कुमतिः कलहाङ्कुरः क्रूरः॥

(पुनर्बन्धुरामवलोक्य भो वत्स कलहाङ्कुर।)

प्रलम्बितपयधरा चतरजो विकारास्पदं
सदाविगतहंसका तिमिरलुप्ततारारुचिः[3]।
तिरस्कृत निशाकरा[4] गतवया इयं बन्धुरा
वटो सपदि वीक्ष्यतां जलधरागमश्रीरिव॥

पसरणं वत्स वन्दनीयतरां बन्धुरामुपसृत्य नमस्कुरु)

---

गांजा इति प्रसिद्धिः। (1) पापानाम्। (2)

तिमिरोऽक्षिरोगस्तेन लुप्तकनीनिककान्तिः। (3)

तिरस्कृत निशाकरा निन्दित रात्रिकिरणा। (4)

कलहः । सर्षसोल्लासं परिक्रम्य बन्धुराया श्चरणद्वयमध्यमागतो दण्डवत्प्रणम्य पुरस्तज्जघन मालोक्य सहस्ततालमुच्चै र्विहस्य पुनः संस्कृतमाश्रित्य भो महामहोपाध्याय आश्चर्य्यमस्या बन्धुराया अधोमुखे श्मश्रुश्रेणी ।

अपिच ।

स्तनौ तुङ्गौ निपतितौ कामसंग्राममर्द्दितौ ।
पुरस्ता दवलोक्यास्या भगं शुष्कं भयादिव ॥

बन्धु । सस्मितं णट्टो वटुओ सत्यकं कलहाङ्कुराभिधानो[1] ।

विश्वः । नायिका मवलोक्य अहो तरुण्या भावप्रकर्षः[2] ।

स्वैरं[3] सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते
रोमाञ्चं तनुते मुहु स्तन तटे व्यालम्बते नाम्बरम् ।
आलिङ्गत्य परां तनोति चिकुरं मत्युत्तरं याचते
केयं कामकला विलासवसति र्लीले क्षणाभाविनी

नष्टोवटुः नार्थकं कलहाङ्कुराभिधानम् । (१)

निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिया । जन्मतः प्रभृतिनिर्व्विकारेमनसि उद्बुद्धमात्रो विकारो भावः । (२)

सन्दं यथास्यात्तथा । (३)

अपिच।

खेलत् खञ्जननेत्रया परिलसत् स्वर्णारविन्दास्यया
पीनोत्तुङ्ग निरन्तरस्तनभरव्यालोलसन्मध्यया।
स्फीतस्फीतनितम्बया क्षणमपि व्यालोकित स्थानया
किं नस्याद्दृमिनाम्बरः स्मरहरः[1]स्मारैः[2] शरै र्जर्ज्जरः॥

मन्थु। उअज्झाय एषा मियङ्कलेहा मे पुत्ती मन्महतन्तं पढिदुं सुसज्जिदा वट्टदि[3]।

विश्वः। विहस्यास्माकमध्यापनं शून्यमन्दिरं एव वर्त्तते।

स्नगा। अम्बको एसो बुड्ढसाद्दूल गलिदणखद-सणो जआजुस पञ्जरो अदि हदव्वीड़ो अह्मसिसं मं विड़ाम्बदि[4]।

कलहः। सक्रोधम्। आः पामरि गणिए परपुत्त विट्टाणिणि अह्माणं उअज्झाअं दिट्ठा ण कुरु कुव्य-बसयिणं विड़ाम्बसि।

---

महादेवः। (१) स्मरस्य संस्मारस्तैः। (२)

उपाध्याय एषा मृगाङ्कलेखा मे पुत्री मन्मथ तन्त्रं पठितुं सुसज्जिता वर्त्तते। (३)

मातक एषो वृद्धशार्दूल इव गलितनखदशनोज्वराजीर्ण पञ्जरो अतिहत ब्रीड़ो। अहर्निशं मां विड़म्बयति। (४)

आः पामरिगणिके परपुत्रवित्तशालिनी अस्माकम् उपाध्यायं

यम्म । "णिउअणा अणुरत्ता वम्हणी णत्तं दिवं विअड्ढाणां ठाणे वन्धणिअहं सिक्खेअन्ती अज्जवि भमइ अइसिणेहेण उअज्झाअ पुरदो वैहव्व मण्डलं कदुअ णिच्चं अनुमरणत्थं सुसज्जिदा भोदि तं वुड्ढं जप्पेसि ।

अविअ । अज्जवि उअज्झाअ लज्जा उलो वसणं पलिहलिअ जणण्यङ्के सअणं कुणइ एणं हदव्वीडं जप्पेसि१ ।

(इति सक्रोधं नाटयति ।)

मगा । विहस्य । धणा सा वम्हणी सिसेसा वि धम्म तहा उआज्झाअ२ ।

वन्धुरा । पुत्ति एदं ण भणिदव्वं मन्ददमं उआज्झाअं ण आणासि वुड्ढोवि मअण कमल पआस दिणणाहो अज्ज वीसहण्डो भुवणजणाणं उअज्झाय३ ।

इष्टा न कुरुकुव्यवसायिनम् । यस्य त्रिभुवन अनुरक्ता ब्राह्मणी नक्तन्दिवं विदग्धानां स्थानेबन्धनिवहं शिक्षमाणा अद्यापि भ्रमति अतिस्नेहेन उपाध्याय पुरतो वैधव्यमण्डलं कृत्वानित्यम् अनु-मरणार्थं सुसज्जिताभवतितं वृद्धं जल्पसि । अपिच अद्यापि उपाध्यायो लज्जाकुलवसनं परिहृत्य जनन्यङ्के शयनं करोति तं हतव्रीडं जल्पसि । (१)

धन्यासा ब्राह्मणी शिष्योपि धन्य स्तथा उपाध्यायः । (२)

पुत्रि एतद् न भणितव्यं मन्दतमम् उपाध्यायं न जानामि

विश्वः । (आकर्णात्मगतं अहो आश्चर्य्यम् ) ।
प्राप्ता प्रस्फुटकाशपुष्पपदवी केशैस्तथैव भ्रुवा सम्यक्-
लोचनपक्ष्मणाच जरसा जीर्णा च दन्तावली । शुष्कं
मन्मथ मन्दिरं निपतितौ शुष्काति शुष्कौ स्तनावे
तस्याः सुतरां तथापि वचने जागर्त्ति पुष्पायुधः ।

भवतु एषापि क्व यास्यति ॥

(प्रकाशम् । )

(बन्धुरे जरातुरा वेपमाना[१] दृश्यसे) ।

बन्धुरा । सच्चं पुब्ब अणुरत्तोसिणेहाणं विअड्डाणं
गुणं सुसरन्ती अणङ्ग ज्वराउला क्खु अहं[२] ।

विश्वः । विहस्य भो भो महाराज मदनज्वरा-
तुरा बन्धुरा ।

राजा । तत् कथं ना ह्वयते आतुरान्तक-
सुतो महावैद्यो व्यधिसिन्धुः ।

विश्वः । अपि न ज्ञायते आतुरान्तकसुतो
सौ किञ्चास्यगुणा न ज्ञायन्ते ।

---

वृद्धोपि मदनकमल प्रकाश दिननाथ आर्य्य विश्वभण्डधूर्त्तणाम्
उपाध्यायः । (३) कम्पमाना । (१)

सत्यं पूर्व्वानुरक्त स्नेहानां विदग्धानां गुणं सुस्मरन्ती अनङ्ग
ज्वराकुला खल्वहम् । (२)

राजा । भवतापि न विदितं तस्योपचारवचनम्

नेत्रे तप्ताशलाका जठरगुरुगदे[1] श्लीपदे[2] छिन्नरक्त
रश्मर्य्यां[3] नासिकायां वडिश मतिशितं तप्तकालश्च
हृद्रोगे यन्त्र दारुद्वयनिविडतरं बन्धनं मुष्कदेशे
ऽप्येतै रमेत्रापचारैर्नयति पितृवनं रोगिणं कं न चाशु

अपिच ।

काशे धूम स्तुषाणां बलवति मरुति स्वेद भेदोपवासा
वह्नेर्मान्द्ये च पिष्टं स पिशितमनिशं वारिपानं
पित्तार्त्तौ वारनालं[4] त्रिकटुरपि जलद्रोणिकासन्निपाते
त्रुमो व्याधिसिन्धो र्गुणमिह सुतरा मेकवक्त्रेण

नेपथ्ये ।

पाणीयस्थूलपादे कथमपि धरया धारिते साङ्कुरौघे
हस्तन्यस्ताञ्चलाग्र प्रचलित पवनैर्वारयन मक्षिकालीं
काशात्कण्ठस्वनौघैःसपदिमुखरयन्दिङ्मुखंव्योमवीथी
मप्येष व्याधिसिन्धुःप्रविशति सरुजा मन्तको राजवैद्यः ॥

(प्रविश्य व्याधिसिन्धुः । शनैः परिक्रमय सगर्व्वम् ।)

वैद्योहं व्याधिवर्गाणामारूयोप्य यशोनिधिः ॥

(मया चिकित्सितः सद्यो मार्कण्डेयो न जीवति)

---

उदर भारे । (१) गोद पादे । (२)

मूत्रकृच्छ्रे । (३)

कांजीति यस्य प्रसिद्धिः । (४)

अपिच ।

तिष्ठन्त्वौषधयः सर्व्वाश्चिकित्सापिच तिष्ठतु ।
मम दर्शनतो रोगी किल प्राणै र्व्विमुच्यते ॥

(उपसृत्य भो भो महामहोपाध्याय अयमहं नमस्करोमि)

विश्वः । कलहाङ्कुर देहि भिषाज शुभाशीर्व्वादम् ।

कलह । हस्तमुद्यम्य उच्चैः ।

सत्यायुर्भव साम्प्रतं चिररिपु र्जीव दण्डहयं
वक्षस्ते खरकण्टको निविशतां भोगी गले चुम्बतु ।
अन्येषा मपराधत स्तवशिरो राज्ञाच संयम्यतां
हासक्तो[1] भव सर्व्वदा तव गृहे वह्निः सदा नृत्यतु ॥

(व्याधिः । अरे पामर वटो मा मवक्षिपसि) ।

विश्वः । विहस्य भो व्याधिसिन्धो तवपितु रातुरान्तकस्य अन्तकालय प्राप्तस्य कुशलम् ।

व्याधिः । कुतः कुशलं भवदर्शनम्बिना ।

पुनर्नायिकामवलोक्य ।

कस्य न लुब्धं हृदयं काञ्चन रुचिना कुच द्वयेना स्याः।
आलोक्य हेमकुम्भौ न भवति भुवि कस्य वा लोभः ॥

विश्वः । भो महावैद्यः कश्चित् चिकित्सा मस्मो मां मुखरयति ।

---

निरन्नोभव हाभात इति यस्य प्रसिद्धिः । (१)

व्याधिः। सगर्व्वम्। पिण्डाय तण्डुल तिल प्रच
निधाय पाणौ खनित्र मपि चारु चितार्थ मेव।
वैद्योस्मि रोगि जनबान्धव संप्रदायैः
प्रष्टव्य एव हृदयेषु विमुच्य मोक्षान्॥

(विश्व विहस्य महावैद्योसि।)

पुनः सहर्षं महावैद्यप्रचुरतर शृङ्गाररस प्रागल्भ्यात्
स्लेष्मातुरा वन्धु रा तत् क्रियता मस्या उपचारः[1]।

व्याधि। तदलम्बिलम्बेन॥ सुतप्त कटुतैलेन[2]
कथमस्या गुदे नस्यं न दीयते।

वन्धु। विहस्या त्मागतं एसो वुद्धिरहिदो वेज्जो[3]।

(प्रकाशम्[4]।)

भअवं भग्येण पुच्छिदव्वो महावेज्जो[5]।

विश्वः। (आकाशमवलोक्य) आः महस्सावधानेन
मया विस्मृतः प्रश्नः विहस्य वत्स कलहाङ्कुर
स्मारय वैद्यप्रश्नम्।

कलहः। (प्रस्फुटं) महावेज्ज मिअङ्कलेहाए
पअर चन्दन कुङ्कुम कत्थुरिआ परिले वणोणगओ
कण्डु अणं समुपपसं ता एत्थ किंकादव्वं दं भण[6]

चिकित्स। (१) सार्षपतैलेन। (२) एषोवुद्धिरहितोवैद्य। (३) सर्व्वजनश्राव्यम्।(४) भगवन् भाग्येन प्रष्टव्यो महावैद्यः।(५) महावैद्य मृगाङ्कलेखायाः प्रचुरः चन्दन कुङ्कुम

बन्धु। (स्मितं कृत्वात्मगतं) जधा उअज्झाओ सिस्सोवि तधा जुत्तं भस्सपुञ्जे सारमेआ वठ्ठाणम्।[1]

व्याधिः। वारिपर्णीचये[2] शीतं घृष्ट्वा वृश्चिकं[3] मङ्गतः।
दातव्यो वानरीरेणुः[4] सद्यः कण्डुहरः परः॥

बन्धु। प्पट्ठ दोओ सद्दो[5]।

विघ्नः। भो स्नातक भवतापि विसृतम्।

कलहः। स्मृति मभिनीय हुं[6] स्मृतं महावेज्ज सुरद समर विमद्दणादो मुण्ड[7] पीड़ातुरा बन्धुरा ता एत्थज्जेव किं करी अदु।

बन्धु। स्मितं स्वयमुपसृत्य महावेज्ज जाणिदं देवेज्जतुणं तवावि कह णिग्गहं ओसहं भण।[8]

---

कस्तूरिका परिलेपनेन गात्रकण्डूयनं समुत्पन्नं तदत्र किं कर्त्तव्यं तद्वद। (६)

यथा उपाध्यायः शिष्योपि तथा युक्तं भस्मपुञ्जे सारमेयावस्थानम्। (१)

वारिपर्णी पानेति ख्याता। (२)

शूककीटः। (३)

वानरी आलकुशीति ख्याता। (४)

प्रस्तुत औषधः। (५) हुं वितर्के। (६)

महावैद्य सुरत समरविमर्द्दनात् मुण्डपीड़ातुरावन्धुरा-तदत्रैव किं करोतु। (७)

महावैद्यज्ञातं ते वैद्यत्वं तथापि कफनिग्रहम् औषधं भण(८)

व्याधिः । वर्णं विचिन्त्य हीही कथमेवं न-निगद्यते पुरा राज्ञो मरुत् प्रागल्भात् सिंहासने श्लेष्माजात स्तदा मत् पिता चरक सुश्रुत वाभट-नागार्जुन तत्त्वविद्या आतुरान्तकेन त्वदते लोचन-द्वयं चारचर्णेन निर्माज्ज्य जलौका शतं प्रदाय श्लेष्मा पच्चतः ।

बन्धु । एत्यज्जेव किं काद्व्वम् ।[1]

व्याधिः । अल्पोपचारसाध्ये ऽलं गुरूपचारेण ।
वरटो भृङ्गरीटश्च जलौका वाथ वृश्चिकः ।
आणे नेत्रे च दातव्यः सद्यः श्लेष्म विनाशकृत् ॥

बन्धु । विहस्य सच्चं आदुरान्तक पुत्तो तुमम्[2] ।

(नेपथ्ये कलकलः ।)

राजा ।(आकाशे कर्णं दत्त्वा कर्णं च प्रकाशम्) अये प्रतीहार ज्ञायतामेतत् कोमम दर्शनार्थी तं प्रवेशय ।

प्रती । जं देओ आणवेदि[3] । (निष्क्रम्य सम्यगवलोक्य पुनःप्रविष्टः।) देओ रओ कल्लोल णामधेओ

---

अत्रैव किं कर्त्तव्यम् । (१)

सत्यम् आतुरान्तक पुत्रत्वम्(२)

देव यदाज्ञापयति । (३)

देव रक्तकल्लोल नामधेयो नापित एकेन पौरजनेन रक्तकले-

णाविदो एक्केणपौरजनेन रत्तो कलेवरेण अञ्चलग-
हिदो वट्टदि १।

राजा । (प्रवेशय)। प्रती । तथाकृत्वा देओ
एस रत्तो कल्लोल णाविदो२ । (ततःप्रविशति रक्तालि-
माङ्गेन पौरजनेनाञ्चल गृहीतो रक्तकल्लोलः । (परि-
क्रम्य संस्कृतमाश्रित्य पठति)। मयि क्षुरं गृह्णति
मानुषाणां भवेच्चयाभा[3] तनुतामुपैति। स्वर्टित्ति
निर्व्वाहपरे[4] च रक्तपयोर्म्मिमाला कुलिता तनुःस्यात्॥

अपिच ।

आर्त्तनाद मधिकं प्रकुर्व्वतां हस्त पाद गलबन्ध
पीडनात्। यं छिनद्मि नखरं त्वणामहं समरोहति
पुन र्नजन्मना। स आस्थानमवलोक्य दर्पणमर्पयति।

राजा। बन्धु रे आदौ मुकुरं गृह्णातु भवती।

बन्धु। (गृहीत्वावलोक्यच) भअवं तिमिरा ऊला

---

वरेण अञ्चल गृहीतो वर्त्तते। (१)

संसार दर्शनवासना।(२)

देव एष रक्तकल्लोल नापितः (३)

क्षौरकर्मणि प्रवृत्ते सति। (४)

भगवन् तिमिराकुला दर्पणेन किमपि मुखाकृतिं प्रेक्षिष्यामि।
तद्दर्पणं गृह्णात्वार्य्यः। (१)

दप्पणेण किम्पि सुहाकिदिं पेच्छन्ति ता दप्पणं गेह्णतु अज्ज ।

राजा। भो व्याधिसिन्धो भवदधिष्ठानेन तिमिराकुला कुट्टिनी ।

व्याधिः।कथमग्निवर्णा शलाका स्थिर हस्तेना स्यालोचनतारकामध्ये नदीयते। चक्षुषोरभावात् कुतस्तिमिरता ।

मृगा । विहस्य पढमदो वेज्जस्स लोअणे परीकक्खन्ति[1] ।

व्याधिः। अलमिहावस्थानेन गणिकापि मा मुपहसतीति निष्क्रान्तः ।

विश्वः। मुकुरं गृहीत्वा अवलोक्यच ससम्भ्रमं अहो वार्द्धक्यं जातम् ।

तथाहि ।

भुक्तात्वं ज्वरसा कचेषु दशनाःक्षीणा विशीर्णा तनु स्तैमित्यं नयने स्मृतौ नच वचोलब्धिः स्मयत्वं पले। अस्माकन्तु कथं तथापि विलसद्वाराङ्गनालिङ्गन व्यामोहाय मनः सदैव चलते चित्रं चरित्रं विधेः ।

राजा । अरे नापित ब्रूहि स्वाभिमतम् ।

---

प्रथमतो वैद्यस्य लोचने परीक्षा इति । (१)

रक्तः। देश्रो एदेण दाव पीडाकादरेण समं अह्माणं कलहोवट्टदि[1]।

राजा। मन्त्रिन् विचार्य्यतामनयो र्न्यायः।

मन्त्री। अरे नापित निगद्यतां प्रथमतः कस्य गोचरः।

रक्तः। पढमं अह्माणं[2]।

पौरः। मनाङ्क् शोणित प्रवाहः प्रथमतो गोचरस्तव।

मन्त्री। अरे नापित कथन्तेगोचरः।

रक्तः। आत्मगतं धण्णो मन्तिश्ररो नरराअजोग्गो[3]।

(प्रकाशम्।)

भअवं एदस्सज्जेव णअरजणस्स णहरमूला कह्रणात्थं लोअणमज्झणिहिदं वडिशं भग्गं त्तदेण कारणेण[4]।

मन्त्री। भद्रमुक्त मनेन अरे पौर वडि़शमूल्यं दातुमर्हसि।

बन्धु। सस्मितं धण्णो मन्तिअरो णरवइजोग्गो[5]।

---

देव एतेन तावत् पीड़ाकातरेण सममस्माकं कलहोवर्त्तते। (१)

प्रथममस्माकम्। (२)

धन्यो मन्त्रिवरोनरराजयोग्यः। (३)

भगवन् एतस्यैव नगरजनस्य नखरमूलाकर्षणार्थं लोचनमध्यनिहितं वड़िशं भग्नं एतेन कारणेन। (४)

धन्यो मन्त्रिवरो नरपतियोग्यः। (५)

(प्रविश्य प्रतिहारः।)

भअवं मिच्चासव णामधेयो बह्मणो अज्ज पेच्चिदुमिच्छदि[1]।

विश्वः। प्रवेशय।

प्रती। तथाकरोति।

(ततः प्रविशति मिथ्यार्णवः॥)

मिथ्या। (समन्तादवलोक्य) भो महामहोपाध्याय अस्मत् प्रतिवासि जामातृप्राङ्गणे कश्चिद्ब्राह्मणश्चतुर्वेदाध्यायी ब्रह्मचर्य्य निपुणःसम्बत्सरव्रतायी मक्षिका पादाहति क्षणित देहो मृत स्तेन ब्रह्मवधेन व्याकुली भूतावयमित स्ततो वेश्या प्राङ्गणे स्मार्त्तपण्डित मन्विष्यन्तो भवदन्तिक मागताः स्म तदत्र कानि प्रायश्चित्तानि।

विश्वः। स्मृति मभिनीय स्व नासा पुटे ऽङ्गुलिं प्रदाय परमार्थतो निरूप्याह यदि स्वरूपं ब्राह्मणो मृत स्तदा तद्वनितायाः सुतस्य वा मुखे गोमयजलं वह्निवर्णं कृत्वा प्रदीयतां तेनो भयो र्दिव्यागतिः।

मिथ्या। कर्णेस्वैरं[2] मक्षिकापादाघातेन न मृतः किन्तु रजकीं रममाणःसर्वैः पौरजनै र्लौष्ट्रपातैर्हतः।

---

भगवन् मिथ्यार्णव नामधेयो ब्राह्मण आर्य्यं प्रेक्षितुमिच्छति। (१)

मन्दं यथास्यात्तथा। (२)

विश्व:। तदासर्व्वे निस्तीर्णा निर्मञ्छनं कृत्वा नीयतां तेन पापेन रजकी विलिप्ता।

मृगा। धन्यं पण्डित तुमम्[1]।

मिथ्या। नायिकामवलोक्य।

केनाराधिसरत्नै: सुरनदीतीरे मृडानीश्वर:[2] के।

ना कारि च सम्बरारि[3]चरणे भक्तिर्नितान्तं मुदा।

केनाङ्ग सुरसिन्धु सिन्धुमिलने[4]व्यामोचि निर्म्मा-हतो यस्यैषाङ्कम

लङ्करिष्यति जगद्व्यामोहिमूर्त्तिःचणम्॥

(पुनः सर्व्वानवलोक्यालगतम्।)

वाराङ्गनालिङ्गनाय मम समागम: किन्त्वान्यैवधूतीनां मेलकं नहि जलौकसा मङ्गे जलौका नागति तदल मिहावस्थानेन इति निष्क्रान्ता:॥

राजा। अद्यापि कथं नायात: साधुहिंसको दण्डपालक:। (तत:प्रविश्य साधुहिंसक: किञ्चिन्मद-मुपनीय) अलिहन्त मोपएहिं व्वेव सअलं थअरं

---

धन्यं पण्डितत्वम्। (१)

महादेव:। (२) कामदेव:। (३)

गङ्गासागरसङ्गमे। (४)

रक्तमिव लोचनद्वयम् ॥ (नायिकामवलोक्य सकामम्) वत्स कलहाङ्कुर प्रवृत्तः सन्ध्यासमयः तदस्याः कर्णे स्वैरं भण यया त्वया सार्द्धं निभृतमस्माकं सन्ध्या निर्व्वहति।

कलः। (आकर्णात्मगतम्)। संस्कृतमाश्रित्य दुष्टो ऽय मुपाध्याय स्तरुणीं रन्तुकामः। (अपिच) किम्मे सद्गुरुसेवनैः प्रतिदिनं किं व्योमधामार्च्चनैः किं स्यादध्ययनेन वा सुरपुर प्राप्त्या थ वा किं फलम्। एतस्याः कुच कुम्भ निर्भर परीरम्भ प्रभावोद्भव स्वेदाम्भोभि रनङ्ग वह्नि रधुना निर्व्वापितो नो यदि॥ भवतु तदलम्बिलम्बेन कथमेषा निर्भरमालिङ्ग्य न चुम्ब्यते। उपसृत्य प्रकाशं मिअङ्कलेहे किम्पि जल्पिदु मिच्छेमि[1]।

मृगा। जइ जुत्तं ता कधं ण भणासि[2]।

कलः। (संस्कृतमाश्रित्य) तारुण्यं दिवसानि पञ्चदश वा पीनस्तनोत्तम्भनं नो जातं पुनरित्यहो विधुमुखि प्राणा स्तु न स्थायिनः। ज्ञात्वैवं समुपे-

---

मृगाङ्कलेखे किमपि जल्पितुमिच्छामि। (१)
यदियुक्तं तत्कथं न भणसि। (२)
स्तनस्तनस्य ऊर्द्धस्थैर्य्यम्। (३)

स्यते भ्युपगतो यद्वामद्दृष्ट्या युवान स्थैर्य्यं कुचयो र्हृदि स्थिरतरं जागर्त्ति शल्यं हि तत् ।

मृगा । किञ्चित् स्मयति ।

कल: । मिअङ्कलेहे किम्पि रहस्सं जल्पेमि । सुणादु भोदीति¹ श्रुतिमूले मिलित्वा निर्भर मालिङ्ग्य उच्चैश्चुम्ब्य संस्कृतमाश्रित्य । स्वादितः सुदशन च्छदसीधु नामरै र्विधुरबुद्धिभि रस्याः । यद्विधुन्तुद मुखादवशिष्टः पीयते प्रमुदितं हरिणाङ्कः ।

विश्व: । सक्रोधं श्ररे पामर वटो मत्कांच्चितां नायिकामालिङ्गसि चुम्बसि च श्रतःप्रायश्चित्तीत्व म् ।

कल: । अहं ण तुमं जदो मिच्छालिङ्गिदां नायिकां मकांच्चिदां जल्पेसि² ।

विश्व: । येनाङ्गेन योगादगजो हस्ती त्युच्यते तदभिधानमङ्गं तव छेद्यं भवति येन गुरुवाञ्छिता नायिका स्पृष्टा ।

कल: । अङ्गणा जहण रञ्जण णामधेअं अङ्ग

---

मृगाङ्कलेखे किमपि रहस्यं जल्पामि शृणोतु भवति । (१)

श्रहं न त्वं यतः मिथ्यालिङ्गितां नायिकां मत्काङ्क्षितां जल्पसि । (२)

तुह विच्छेज्जं भोदि जेण सिस्स परिचुम्बिदां नायिकां सवाञ्छिदां जल्पेसि[1]।

विश्व:। अधरो यस्याच्छादनं तस्योत्पाटनं युक्तं येना स्या अधर: पीड़ित:।

कल:। लिगि प्पारणेति धातुनो रपपच्चएरण जं रूअं सिज्झं भोदि तुह तस्स उप्पाटनं जोग्गं जेण सिस्स चुम्बिदां णाइआं पेच्छसि[2]। (इत्यो न्यन्यं॥ कलहं कुर्व्वाणौ चलत: सर्व्वे हसन्ति)। नेपथ्ये वैतालिक: शुभसन्ध्यासमयो ऽस्तु दिवसस्य।

गाढंप्रौढ़ाङ्गनाभि:सुरतरतमन:रुन्मदोत्सारिताच्चम्।
मुग्धाभि स्वस्तनेतं रतिसमरभयं चिन्तयन्तीभिरेवम्॥
पान्थानामङ्गनाभि:ससलिलनयनंमून्यचित्ताभि रुच्चै:।
कष्टं दृष्टो ऽस्तमूलं ऽप्यमलजदयं मण्डलं चण्डरश्मे:

(अपिच।)

गतवति दिननाथे पश्चिमक्ष्माधारान्तम्।

---

[1] अङ्गना जघनरञ्जन नामधेयमङ्गलवविच्छेद्यं भवति येन शिष्यपरिचुम्बितां नायिकां सवाञ्छितां जल्पसि। (१)

[2] लिगि प्रापणे इतिधातोरप प्रत्ययेन यद्रूपं सिद्धं भवति लिङ्ग इति यावत् तव तस्योत्पाटनं योग्यं येन शिष्यचुम्बितां नायिकां प्रेक्षसि॥२॥

शिशिरकरमयूखै र्निर्भरं दह्यमाना। परिहृत
मिलितालिः पान्थकान्तेवदीना।
सपदि कमलिनीयं हास्यहीना बभूव।

(अपिच।)

द्वितीयो वन्दी। क्वैतन्मार्त्तण्डविम्बं सरसि
सरसिजश्रेणिहास्यं कयातं क्व ते यता रथाङ्गाः
सपदि गतह्रियः क्व प्रविष्टा मरालाः। सन्ध्यरा
रागा रुणाङ्गः कुपित इव पतिः प्रोद्यतोयं
हिमांशु र्मन्ये हर्षादेवे यं हसति कुमुदिनी जा-
ग्रती वालि नादैः। (अपिच।) स्वर्भामा स्तपान
पात्रचषकं किं कामदेवाङ्गना क्रीडा कन्दुक एष किं
सुरनदी हिण्डीरपिण्डः किमु। किं छत्रं स्मरभूपतेः
किमुयशः पुञ्जं पुरस्तादिदं चेतः संशयकारकं
समुदितं शीतद्युते र्म्मण्डलम्।

मन्त्री। प्रवृत्तः सन्ध्याकाल स्तत्कथं नित्य-
क्रियायै न गम्यते।

राजा। किं तेन चौरचक्रभयाच्चिन्ताकुलोस्मि
भवतु तथापि यास्यामि क्षणं विरमतृश्यता मनयो
र्गुरुशिष्ययो र्विरोधः।

ङ्गुलारका लोला:। अस्या नयननिपाता: दु:सह-
नीया त्वरस्यापि।

कल:। बन्धुरे एहिम्मि समये णा आदो मथ-
णान्धमिस्सो[1]।

(नेपथ्ये।)

वेश्याङ्गरागरस लोहितयज्ञसूत्र: शक्राशना-
शन[2] विलोहित तारनेत्र:। आभाल पूर्णतिलको
हृतधर्म्म कच्छ: संसर्पति स्वय मयं मदनान्धमिश्र:।
(तत: प्रविशति स्नातकेन कुलाल नामधेयेनानु
गम्यमानो मदनान्ध मिश्र:)

मद:। समन्तादवलोक्य अहो भ्रमद्भ्रमरावली
वलयित रसाल वकुल: कोकिलकलध्वनि जनित
विषाद विरहिणीजन पीवर निश्वासानिल: कुसुम-
कालो वर्त्तते। (अपिच।) कावेरी नीर खेलच्चुतवि
हति भवच्छीकरा सङ्गशीत: श्रीखण्डामोदवाही
प्रमुदितमदन प्राण विश्रामधामा। किञ्चिद् व्याधूत
चूतद्रुम मुकुलकुल: पुष्पवत्या लताया भीत स्प-

---

इदानीमपि समये नायातो मदनान्धमिश्र:। (१)

शक्राशनं भङ्ग्चूर्णं भाङ इति यस्य प्रसिद्धि:। (२)

शीदिव।यं प्रसरति पवनो दक्षिणो मन्दमन्दम् ॥

आत्मगतं कथन्मयास्मिन्नधौ गणिकाम्बिना जीवनीयम् । (प्रकाशं) वत्स कुलाल पश्य मध्याह्नः संवृत्तः । मार्त्तण्डचण्डतापैः प्रतपति वसुधां पक्षिणः कुञ्जसंस्थाः प्रोज्झ्य[1] म्भोजराजी तलशरणगता निश्चला राजहंसाः । पान्थाः श्रान्ताश्च कान्ता चिर विरहशिखिग्लानया भ्रष्टचित्ताः स्थालुच्छायासुलीनाः क्षितिलिखनपराः सन्ततं निःश्वसन्ति । वत्स कस्या मे भोजनसिद्धिरस्तु ।

कुला । अज्ज अत्थि दाव एत्थज्जेव णअरे वन्धुरा णाम कुट्टिणी सा क्खु अदिधीनं परिचज्जं करेदि त्ति सुणीअदि ता अज्ज ताहं ज्जेव भोअण सिद्धी[2] ।

मदनः । कुलीना सा ।

---

प्रहृष्टविकम्पित पद्मश्रेणीतलरूपगृहगताः । (१)

आर्य्य अस्तितावदत्रैवनगरे वन्धुरानाम कुट्टिनी सा खलु, अतिथीनां परिचर्य्यां करोतीति श्रूयते तदद्य तत्रैव भोजनसिद्धिः । (२)

कुला । एत्थ को सन्देहो चण्डालोवि अह्माघरे आणीअं ण पीअदि१ ।

मदः । सोत्प्रासं । वत्स तदुपसर्पाव इत्युभौ परिक्रम्य वन्धुरायाः प्राङ्गणमुपसृत्यो पविष्टौ ।

भुजङ्गः । अज्ज एदं भद्दासणं उअविसदु मिस्सो२ ।

मदः । (नाट्येनोपविश्य सर्व्वानवलोक्य चात्मगतं) अहो आश्चर्य्यं पुरतो नायिकारत्नम् । सायं चन्द्रकला भ्रतोदयगिरि स्पर्द्धां दधानः स्तन स्पर्शोत्तुङ्ग तरो नखाङ्करुचिरः शोणाम्बराभ्यन्तरे । अस्याः कं न विलोकनोत्क मकरोत्तीक्ष्णः कटाक्षः क्षणं भ्रङ्गाकृष्ट गरिष्ठ केतकदलभ्रान्तिं वहन्न प्ययम् । (अपिच ।) उत्तुङ्ग स्तन शैल दुस्तर मुरो निम्नाति-नाभिस्थली भीमं देहवनं स्फुरङ्गुजलतं लोमालि जालाकुलम् ।

व्याधः पञ्चशरः किरत्यतितरां तीक्ष्णान् कटाक्षाशुगान् तस्मै ब्रूहि मनः कुरङ्ग शरणं कं साम्प्रतं यास्यसि । पुनः सविमर्षं कथमेतौ

---

अत्र कः सन्देहश्चण्डालोपि अस्य गृहे पानीयं न पिबति(१)

भेडुया आर्य्य इदं भद्रासनमुपविशतु मिश्र । (२)

कितवौ वञ्चनीयौ । भवतु तावदात्मनो वैष्णवत्वं प्रकटीकृत्य वञ्चयामि । प्रकाशम् । जिह्वेऽनिशं हरि-रिति स्मर लोचन त्वं व्याप्तं बिलोकय जगद्धरिणा समस्तम् । आकर्णय श्रवणकीर्त्ति कथा मुरारे र्नारायणं शरणमाश्रय चित्तमुच्चैः । (पुनरात्मगतम्) आः जातं हरिस्मरणेन महापातकं किं करिष्यामि प्रायश्चित्तमात्मनः ।

विश्व: । आकर्ण्यात्मगतं धूर्त्तोऽयं किमः कैतवं प्रकटयति । भवतु अहमपि किञ्चित् प्रकटयामि । (प्रकाशं) त्रैलोक्यमौलिमुकुटाञ्चितनीलरत्नं पद्मालयावदनतामरसद्विरेफम् । दैत्याङ्गनानयनतोयनिपातधूमं कृष्णं सदैवमनसा परिचिन्तयामि ।

मदः । सरोषं वत्स कुलाल पठ वैष्णवधर्म्मम् ।

कुला । अज्ज जं आणबेदि१ इतिसंस्कृतमाश्रित्य पठति । आयुः क्षीणमिदं परं कलियुगे दैवान्ततः-पामरैर्लोकैरप्युपवासकष्टविधिना व्यर्थं वपुः क्षीयते। ज्ञात्वैवं सुधियो विहाय विविधक्लेशव्रतं निष्फलं नाना भोगविलासिनी रसयुषं धर्म्मं भजन्ते द्रुतम् ।

---

आर्य्य यदाज्ञापयति । (१)

विश्व:। (सक्रोधं) वत्स कलहाङ्कुर पठ वैष्णवधर्म्मम् ।

कल:। संस्कृतमाश्रित्य पठति। कृत्वा लोकभयं नृणां जडधियां कष्टोपवासं निशाकाले प्राणविनाशसंशयकरीं सोढ्वापिमर्म्मव्यथाम्। प्रातश्चेद्यदि जीवितं स्थितमिह प्राप्त स्त्वयाप्यन्धस: साधाज्जीवनसंशय: प्रथमतो मुक्ति: परोक्षा क्व सा॥ (अपिच।) क्लेशोपवासविधिना सुकृतं वदन्ति ये तन्मुखं सपदि पूरय भस्मपुञ्जै:। एक प्रसीदति यदा जगदीश शम्भुर्मुक्तिस्तदा दिशितमीनसुराङ्गनाभि:।

मद:। आकर्ण्यात्मगतं धूर्त्तोयमुपाध्यायो वञ्चयितुमशक्यो जीर्णमार्ज्जारं काञ्जिकया प्रतारयितु न शक्यते। भवतु विनयेन वञ्चयामि। प्रकाशं भगवन्न य महमभिवादये।

विश्व:। उच्चैरायुष्मान् भव सौम्य। किन्त्वा युक्तमेतद्भवादृशां यद्वाराङ्गनाग्रतो मयि प्रथमभिवादनम्।

मद:। अहो वेश्या भ्रमेण भवत्सु प्रणाम: कृत:।

विश्व विहस्य सत्यमेव मदनान्धोऽसौ यतः स्य पि वेश्याभ्रमः।

मद॰। उपसृत्य वाराङ्गने त्वा महं प्रणमामि।

बन्धु। पुत्ति उट्ठिअ आसिसं कुण[१]।

लगा। उत्थाय गौरी दे सुप्पसण्णा होदु[२]।

(इति स लज्जं नाटयति।)

मद॰। अहो आश्चर्य्य मस्याः। पादाभ्यां सगुरु र्नितम्ब एषः। प्रोद्वोढु कथमपि शक्य ते कृशाङ्ग्या। एकाकी वहति कथन्नु मध्यभागः प्रोत्तुङ्गस्तनकरिकुम्भयुग्मभारम्।

बन्धु। अज्ज विप्पअ८ विण्णवेमि अज्ज अह्माणं गेहे कन्दप्पहोमं बट्ट दिदं निव्वाहयदु मिस्सो[३]।

मद॰। सहर्षमात्मगतमङ्गनामवलोक्य। वेदी सज्जघनञ्च तत्परिसरे कुण्डं वराङ्गं फलं नैवेद्याय कुचद्वयं मृगदृशः कामानलः प्रोज्ज्वलः। होताऽहं

---

पुत्रि उत्थायाशिषं कुरु। (१)

गौरीते सुप्रसन्ना भवतु। (२)

आर्य्य विप्रवर विज्ञापयामि अद्यास्माकं गृहे कन्दर्पहोमं वर्त्तते तं निर्व्वाहयतु मिश्र। (३)

खलु शुक्रहव्यनिवहं शेफश्रुवं भावयन्नित्यं पश्च-
शाराध्वरं त्यजति कः सद्यः सुखं यत् फलम्। प्रकाशं
वन्धुरे त्व मतिर्जीर्णा अकार्य्य कुशला च तन्नियो-
जय स्वपुत्रीं यज्ञसामग्री करणाय।

बन्धु। पुत्ति तुमं बिप्पअर शासनं कुण।१(स्वगा
गृहं प्रविशति।) उपसृत्य कलहाङ्कुरः। पढमं
अह्माणं गुरुसिस्साणं णायं विचारीअदु अज्जमिस्सो२।

मदः। आर्य्यपुत्र क्षणं विरम यावत्। क्रतु
क्रिया निवर्त्तते इति गृहं प्रविश्य निर्भरं सुरतं
निर्व्वाह्यसंघर्षम्। आश्लेषपीड़ितकुचं स्मरहर्म्मितास्यं
दष्टाधरं ललितशीत्कृतमीलिताक्षम्। चाटूक्ति-
चारुललितस्म चलत्कटाक्षं वेश्यारतं जनिशता-
र्ज्जित३ पुण्यलभ्यम्। (परिक्रम्यवहिः प्रविशति।)
नायिका च परिक्रामति।

विश्व:। (नायिकामवलोक्यात्मगतम्।) यन्नेत्रं
गलिताञ्जनम्। सुललितं निर्मुक्तरागोऽधरो

---

पुत्रित्वं विप्रवरशासनं कुरु। (१)

प्रथमं अस्माकं गुरुशिष्याणां न्यायं विचारयतु आर्य्यमिश्र। (२)

शतजन्मार्जितम्। (३)

धम्मिल्लः[1] स्नयबन्धनः श्रमजलप्रक्षालितं चन्दनं निष्पन्दं जघनं भुजे शिथिलता वक्षःस्थलं कम्पते तत् सत्यं सुरतं विधाय सुतरा मेषा समागच्छति ।

कुल्ला । (पुरः साट्टहासम् ।) अज्ज एक्केण णिव्वाहिदा कदुक्किआ[2] ।

मद्दः । दक्षिणाक्षिसङ्कोचं निवारयति ।

कुल्ला । किं णिआरणेण अस्सस्स पुस्सेण किं अयो पूदो भोदि[3]।

मद्दः । वत्स क्षणं विरम ।

विश्वः । सत्यमेतं महाभिश्र ज्ञातेयन्ते क्रतुक्रिया भवतु तथापि विचार्य्यता मावयो र्न्यायः । कयौ स्वैरं ययेयं मृगाङ्कलेखा मया परिणीता भवति तदनुष्ठेयम् ।

मद्दः । आवाभ्यां परिणेतव्येषा ।

विश्वः । को दोषः पश्य । एकः शिवो विविध मेव विकार मेत्य व्याप्याखिलं जगदिदं रमते मृड़ा-

संयताः कचाः खोपा इति यस्य प्रसिद्धिः । (१)

आर्य्ये एकेन निर्वाहिता क्रतु क्रिया । (२)

किं निवारणेन अन्यस्य पुण्येन किम् अन्यः पूतो भवति । (३)

नीम्। ब्रह्माण्डभाण्डकुहरे समुपेत्य सम्यक् कीर्तिं मनोहरणभूमि सदावहन्तीम्।

कुला। आलगतम् आभ्यां धूर्त्ताभ्यां मिलितं भवत्व हमपि कलहाङ्कुरेण समं सख्यं करोमीति परिक्रम्यकलहाङ्कुरस्य कण्ठमालिङ्ग्य कर्णेस्वैरम्। व-अस्सपेक्खस्स एदेहिं गुरुएहिं मिलिदं एषा मिअङ्क लेहा एदेहिं ज्जेव परिणेदव्या ता कधं अह्मेहिं एसा वन्धुरा णो परिणीअदि[1]।

कल:। वअस्स भद्दं भणिदम्। अदो अह्माणं त्ति वुढ्ढ्त्ता सुरदं ण जाणेदु वट्टदि किं उण एक्कं परमं दुःखं एषा तिहुअण मोहिणी वुढ्ढ्वेहिं परिणेदव्या णहि मालइमाला वाणरहत्थ गदा सोहइ णहि कत्थुरिआ गुण ग्गामं कुग्गामिणो आणन्ति णहि गलिद जोव्वणाए रक्खत्थले मोत्तिअ माला सोहइ[2]।

---

वयस्य प्रेक्षस्व एताभ्यां गुरुभ्यां मिलितं एषा मृगाङ्कलेखा एताभ्यामेव परिणेतव्या ततकथमाराभ्याम् एषा वन्धुरान् परिणीयते। (1)

वयस्य! भद्रं भणितं वत अस्माकमपि वृद्धा सुरतं न ज्ञातुं वर्त्तते किं पुनरेकं परमं दुःखं एषा त्रिभुवनमोहिनीवृद्धाभ्यां

कुला। बअस्स एदेहिं जेव बुढ्ढेहिं कत्तिदिणं जीविदव्वं एदाणं लोआन्तर गमणे एसा अह्मेहिं परिणेदव्वा१।

कलः। सच्चं तधावि पढमं दुःख२।

कुलाः। एह्हिम्पि पदिवासरं एदाणं भिक्खा-ण समये एसा गेहबट्टिणी भविस्सदि बन्धुरा तिमि राउललोअणा तदो अह्माणं मणोरह सिद्धी३।

कलः। भोदु जं भणादि बअस्सो४।

बन्धु। (विहस्यात्मगतं) मिलिदं सठेहिं तहिं परिचिदं भोदि५।

---

परिणेतव्या न हि मालतिमालावानरहस्तगताशोभते न हि कस्तुरिकागुणग्रामं कुग्रामिनो जानन्ति नहि गलितयौवनाया वक्षःस्थले मौक्तिकमालाशोभते। (२)

वयस्य एताभ्यामेव वृद्धाभ्यां कतिदिनं जीवितव्यं एतेषां लोकान्तरगमने एषा आवाभ्यां परिणेतव्या।(१)

सत्यं तथापि प्रथमं दुःखम्। (२)

इदानीमपि प्रतिवासरमेतेषां भिक्षाटनसमये एषा गृह-वर्त्तिनी भविष्यति बन्धुरा तिमिराकुललोचना तदा अस्माकं मनोरथसिद्धिः। (३)

भवतु यत्कथयति वयस्य। (४)

मिलितं शठाभ्यां तयोः परिचितं भवति। (५)

मद्‌ः। भो महामहोपाध्याय कीदृशो युवयो-न्यायः। क्रियतां प्रश्नः।

विघ्न:। अस्मत्काङ्क्षितां मृगाङ्कलेखां अ-परिणेतु मिच्छति।

मद्‌ः। भो कलहाङ्कुर तव प्रत्युत्तरं कीदृशम्

कल:। एसा मिअङ्कलेहा मए आलिङ्गिद परिचुम्बिदा तधावि एष इमां परिणेदु मिच्छति[1]

मद्‌ः। अलं शुष्कचर्वणेन ज्ञातं न्यायतत्वम्। एष प्रथमत उपाध्यायेन कल्पिता एतेन कथमप्यं श्यैके-नास्य भवति व्यवस्थापकत्वात् समन्तादस्माकं भवति। पुनः ससम्भ्रमं भोभो आर्य्यपुत्र यथा त्वं द्वादशव-र्षीयोवर स्तथा च बन्धुरा उदपतिगणना लेखा-मिव लेखां शरीरतो दधती कन्येयं तव योग्यावर्ष-शतात् किञ्चिदप्यधिका। उपसृत्य कुलालः संस्कृ-माश्रित्य एषापि व्यवस्थापकशिष्यत्वान्मम एवभवति।

मद्‌ः। भो आर्य्यपुत्र कलहाङ्कुर भवत्वेवं भवता-मच्छिष्येण सम मेषा परिणीयताम्।

---

एषा मृगाङ्कलेखा मया आलिङ्गिता परिचुम्बिता तथापि एष इमां परिणेतुमिच्छति। (१)

कल:। जधा सासणं विप्पश्चरस्स[1]।

बन्धु। सहर्षमात्मगतं संस्कृतमाश्रित्य अहो मयि प्रसन्नः प्रजापतिः। यतो वार्द्धकेपि तरुण पतिद्वय लाभः।

विश्व:। (स्नातकमवलोक्य सस्मित मात्मगतम्। निष्क्रामति) शिशोः कायो येन रन्ध्रेण योषितः। कं करिष्यति तत्रायं वटुः शिश्नशलाकया। पुनः प्रकाशम्।) प्रत्यासन्नो विवाहोत्सव स्तत् कथं नाक्ष्यते दक्षिणराढ़ीयो महामिन्दकाकार्य्यः।(प्रविश्य महानिन्दकाचार्य्यः। सर्व्वानवलोक्य सदम्भम्। ब्रह्माण्डे के द्विजाः सन्ति पाण्डित्येन कुलेन वा। ये स्पर्द्धितुं मया सार्द्धं किञ्चिदावर्ज्जितोद्यमाः। पुनः सगर्व्वं मया रचिताश्चत्वारो वेदाः।

कल:। अज्ज बह्मसुह खिग्गदा वेश्रा ता कधं भवदा विअद्ददा२।

महा। (सक्रोधं) आः क्षुद्रबुद्धि ब्रह्माणं गणयसि शृणु तत्कौलिन्यपरीक्षार्थं स्वर्गगतेन मया। पाद्यं विष्णुपदीजलेन चरणे दत्तं शिरोवर्त्तिना तत्क्रो-

महानिन्दः । स्वस्तीति स्टहीत्वा स्वानन्दं शिरसि विधाय स्फुटं प्रणवमुच्चार्य्य गायत्रेत्र नमद्दति भूमौ किञ्चित्त्यक्ता पुनं र्भंघयित्वा सोत्साहम् । जनयति सुरतेषु मुदं प्रथयति पीयूषवर्षिणीं वाणीम् । रचयति लोचनकुतुकं सञ्जयति प्रकाशनानन्दः ।

बन्धु । कुलीन वरो प्राप्तव्या ।

महानिन्दः । पुनरुपसृत्य भो भो भवगन्मिश्र प्रदीयतां कन्यादान दक्षिणा । उभौ वदतः । प्रतिपाल्यतामब्दचतुष्टयम् ।

महानिन्दः । तावदेषा बन्दकी तिष्ठतु । इति स्रगाङ्कलेखा हस्ते धृत्वा तया सहसहर्षं नृत्यति ।

महायाचिकः । भो भो महानिन्दकाचार्य्य किमिदानीं भवता मपेक्षित मस्ति ।

महानिन्दः । (सहर्षम् ।) लब्धेयं युवति ज्जगज्जनदृशा मानन्दभूमि र्भृशं धूर्त्तानां निकरं प्रवञ्च्य रभसात् प्राप्ता स्व हृत्प्रीतयः । सम्प्रत्युद्भटसम्बराारि समरं नानारतास्वाङ्कितं गत्वा केलिरटहं विधातु मधिकं वाञ्छावरीवर्त्तते ।

इति हास्यमहार्णवनामप्रहसनं समाप्तम् ।

---

कुलीनवरो माचार्य्यः । (१)

# हास्यार्णवनामकं

## प्रहसनम् ।



महामहोपाध्याय

श्रीयुक्तजगदीश्वरतर्कालङ्कारभट्टाचार्य्य

विरचितम् ।



श्रीयुक्तबाबुभुवनचन्द्रवसाक महोदयस्य प्रार्थनया

अशेषशास्त्राध्यापक श्रीयुक्ततारकनाथतर्कवागीशभट्टाचार्य्यात्मज

श्रीमहेन्द्रनाथशर्म्मणाकृतया व्याख्यया सहितम् ।

कलिकातानगरे

अशेषविद्योत्साहिना

श्रीयुक्तबाबुभुवनचन्द्रवसाकसंस्थापित

संवादज्ञानरत्नाकराख्ययन्त्रे तद्द्वारैव १९२९ संवत्सरे

मुद्रितम् ।

निमतलाघाट ष्ट्रीट ८ संख्यक भवने ।

# ŚRINGÁRA TILAKA.

BY

ŚRI KÁLI-DÁSA,

WITH A COMMENTARY,

BY

KAVIRÁJ CHANDRA MAJUMDÁRA.

EDITED BY

KAYLÁS CHANDRA SÉN GUPTA,

AT THE REQUEST OF

BÁBU BHUVANA CHANDRA VASÁKA.



CALCUTTA:

PRINTED & PUBLISHED BY

BÁBU BHUVANA CHANDRA VASÁKA.

At the sangbáda Jnánaratnákara Press.

No. 8 Nimtollah Ghat Street.

1871.

# शृङ्गारतिलकम् ।

## महाकविकालिदासविरचितम् ।

वैद्यमहामहोपाध्याय श्रीमत्कविराजचन्द्र मजुमदार
प्रणीतया शान्तिप्रदटीकया समेतम् ।



श्रीयुक्तभुवनचन्द्रवसाकमहोदयस्यानुरोधेन
श्रीकैलासचन्द्रसेनगुप्तेन परिशोधितम् ।



कलिकातायाम्

त्रिनवत्यधिकसप्तदशशतशाकीय सौराग्रहायणस्य
पञ्चदशदिवसे

श्रीयुतभुवनचन्द्रवसाकमहोदयस्य प्रार्थनया
तद्द्वारैव संवादज्ञानरत्नाकरयन्त्रालये
मुद्रितम् ।

(निमतला घाट ष्ट्रीट ८ संख्यक भवन)

# विज्ञप्तिरियम् ।



महाकुलसम्पन्नभिषग्वृन्दवन्दितकुलविष्णुदासकुलसम्भूतः कविवत् कविकुलावतंसोऽनन्यसाधारणधीविद्यासाध्योत्तरराघवपाण्डवीयादिग्रन्थप्रणयनैः क्षितितले लब्धैकविमलयशाः कवीन्द्रवरः श्रीमत्कविराजचन्द्रो महाकविगणाग्रगण्यश्रीमत्कालिदासविरचितद्वाविंशतिश्लोकसम्पूर्णशृङ्गारतिलकनामग्रन्थस्य सर्व्वजनविज्ञातशृङ्गाररसविपरीतशान्तिरसव्याख्यायिनींघोरसंसारपाशमोचने चैकसाधनशान्तिरसाकृष्टमनसां विदुषां सान्त्वोल्लापिणीं टीकां प्रणीतवान् । सटीकरघुवंशादिमहाकाव्यमुद्राङ्कयद्भिः सूरिभिर्ग्रन्थस्य क्षुद्रकायत्वादलाभाद्वा शान्तिपक्षटीकया शृङ्गारतिलकं न मुद्रितम् । अधुना तदर्थकौशलरसोत्तमतोषितमनस आयुर्व्वेदादि विविधसंस्कृतग्रन्थ मुद्राङ्कणप्रभूतयशसोदेशभावुकभावनैकनिश्चयस्य तन्मुद्राङ्कणोत्सुकस्य श्रीयुक्तभुवनचन्द्रवसाकमहोदयस्यानुरोधेन मया यथासाध्यं परिशोधितम् ।

अज्ञानतो मेऽनवधानतो वा शुद्धेषु योऽत्स्यत्र स शोधनीयः ।
वर्णादिदोषः क्षतिभिर्ङ्कताशैर्यथासुवर्णस्य हि दोषहारैः ॥

काशीयानी निवासिनः ।
श्रीकैलासचन्द्र सेनगुप्तस्य ।

# अथ शृङ्गारतिलकम्।



बाहू द्वौ च मृणालमास्यकमलं लावण्यलीला-
जलं श्रोणीतीर्थशिला च नेत्रसफरं धम्मि-
ल्लशैवालकम्। कान्तायाः स्तनचक्रवाक-

यदङ्घ्रिवारिजरजःपरमाणोरनुग्रहात्। नश्यत्यज्ञानति-
मिरं तं वन्दे गुरुमव्ययम्॥ श्रीकालिदासेन कवीन्द्रवृन्द शिरो
वतंसेन कृतेष्वमीषु। श्लोकेषु मौद्गल्यकुलप्रसूत स्तनोति टीकां
कविराजचन्द्रः। सर्व्वैरत्र शृङ्गाररसस्य पद्यं पश्यन्ति शान्तस्तत्
वेत्ति कश्चित्। प्रच्छन्नभूतं सुतरां यथास्मिन् देहे निविष्टं परमं
पुमांसम्। सम्प्रदायविरहादिह चत्त्वा शान्तिपक्षविहतेर्न कू-
टता। दूष्यतां समवलम्बतां पुनःकल्पनान्तरमतिं स्वच्छताम्।

इह महाकविश्रीकालिदासःप्रसादवत्‌पद्यप्रतिपादितशृङ्गार-
रसतिरोहितं काचपुटकादिकरणकस्थगितमणिन्यायेन, शा-
न्तिरसमाहितवान् तादृशशब्दोपन्यासेन च शृङ्गाररसस्यापात-
तोमधुरत्वं सर्व्वसाधारणत्वञ्च शान्तस्य पुनस्तदतिरेकित्वमभिप्रे-
तवान्। तत्र प्रथमं शान्तिवर्त्मन्युपदेष्टव्ये कान्तायाः शान्त्यन्तरा-
यभूतत्वात् परिहारमुपदिशति।

बाहू इत्यादि। हे विद्वन्नित्यर्थोदृग्धानां लोकानां व्यामुग्ध-
तानां हतादिवद्दग्धशब्दः क्षेपविषये यथाप्रयुक्तं भवभूतिना
दग्धहृदय कोऽयमाकस्मिकस्ते पारिप्लवो विकारइति। कन्दर्प-

युगलं कन्दर्पबाणानलै र्दग्धानामवगाहनाय विधिना रम्यं सरोनिर्म्मितम् ॥१॥
आयाता मधुयामिनी यदिपुनर्नायातएव प्रभुः प्राणायान्तु विभावसौ यदिपुनर्जन्मग्रहं प्रार्थये । व्याधः कोकिलबन्धने

बाणानलैः कामशराग्निभिः करणै गाहनाय, आकुलीकरणाय, विधिना निर्म्मितं कान्ताया देहरूपं सरोटरम्यमरमणीयं, अव, जानीहि । तत्र कदाचिन्नरतिःकार्य्या तन्निर्म्माणस्यपरपीड़नमात्रप्रयोजनकत्वान्नवि इत्मोहोयुक्तः अतो दग्धानामित्युपन्यस्तम् । सरःत्वाधर्म्मप्रमाह वाह इत्यादिना तीर्थशिला अवतार पाषाणः, धम्मिल्लः संयताःकचा इत्यमरः । अन्यत्तु बोधं,तीर्थं शास्त्राध्वर क्षेत्रोपायनारीरजःसुच । अवतारर्षिजुष्टाम्बु पात्रोपाध्यायमन्त्रिषु, इति मेदिनिः । अत्रावतारोघट्टः । अवरक्षे गतौ कान्तौ प्रीतौ तृप्तौ स्मृतौ स्तुतौ । स्वाम्यर्थेऽवगमे काले कृताविति वोपदेवः ॥ १ ॥

आयातेति । आत्मज्ञानाभ्मस्य निश्चितमरणावश्यम्भावस्य प्राणत्यागायोद्यतस्य कस्यचिदुक्तिरियम् । यामिनी कालरात्रि मरणकरी, अधु, नविद्यते धुः कम्पनमभिभवोयस्य तादृशं यथा-स्यात्तथा आयाता आयास्यति अत्तनी एतदनन्तरम् आङ्निश्चये आङ् ज्ञाननिश्चयस्मृ[illegible]योरिति मेदिनिः । यदिपुनःप्रभुरात्मानयातोनज्ञातः आत्मज्ञानं [illegible]ोत्पन्नमित्यर्थः । न इत्यतः आः पीड़ायां, आस्तुस्यात्कोप[illegible] पीड़योरित्यमरः । तदाप्राणा विभावसौ वह्नौ यान्तु, अग्नि[illegible]देव प्रविशन्त्वत्यर्थः । अहं पुनर्जन्मग्रहं न प्रार्थये इत्यतोऽत्र[illegible]नञर्थःप्रत्येतव्यः, अशब्दःस्यादभावेऽपि स्वल्पार्थे प्रतिषेध[illegible]ति मेदिनिः । यदिशब्दो गर्हायां

हिमकरध्वंसे च राज्ञग्रहः कन्दर्पहर-
नेत्रदीधितिरहं प्राणेश्वरे मन्मथः ॥ २ ॥

इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन
दन्तमधरं नवपल्लवेन । अङ्गानि चम्पक-
दलैः स विधाय वेधाः, कान्ते कथं घटित-
वानुपलेन चेतः ॥ ३ ॥

यदि गर्हाविकल्पयोरिति कोषः । नानारूपेण सकलसंघातु-
कत्वं बोधयितुं कालरात्रिं विशिनष्टि व्याधः कोकिलवन्ध्वने
इत्यादि तस्यास्तत्वनिरूपणाय पुनर्विशिनष्टि इमन्मथः प्राणे-
श्वरेति इः कामस्तस्य मदं मथ्नाति स क्विप् तस्य शिवस्य
प्राणेश्वरास्त्री शिवस्य हृदम्भोजस्थिता संहाररूपिणीति,
तोडलतन्त्रे, ईश्वरेति ईशेर्वरप्रत्ययान्तात्टाप्रत्ययः ईप्रत्ययस्तौ-
णादिकवरट्प्रत्ययान्तादिति ॥ २ ॥

इन्दीति । नदीनयनादौ नीलोत्पलादिभ्रमशालिनां रागिणां
मोहं निरसितुं कारणोपन्यासद्वाराजुगुप्सितत्वं प्रतिपाद्यमोह-
कारणमप्युल्लिखति । वेधाः स्रष्टा उ भोः नयनम् इन्दीवरेण न
घटितवान् मुखं नाम्बुजेन दन्तं न कुन्देः अधरं न पल्लवेन अ-
ङ्गानि न चम्पकदलैः, तर्हि केनेत्याह पलेनमांसेन अत्र पलपदं
जुगुप्सितत्वसमवायिसामग्रीसम्भारोपलक्षणं तेनटन्तम् इत्यने-
नान्वयः संगच्छते, ननु तदा कथमेवं प्रतिभास इत्याह चेतो मनः का-
न्तेकथं कान्ताकमनीया इकथा कामकथा यस्य तादृशं विधायकत्वा
नयनादिकानिन्दीवरादिनेव घटितवान् तस्मात्कामानुरागादेव
जुगुप्सितेऽपि वस्तुनि रमणीयताप्रतिभास इति सर्वथा काम-
स्य परित्यागः करणीय इत्युपदेशः । नवपल्लवेनेत्यत्र नवेति-

एकोहि खञ्जनवरो नलिनीदलस्थो दृष्टः करोति चतुरङ्गबलाधिपत्यम्। किम्वा करिष्यति भवद्वदनारविन्दे जानामि नो-नयनखञ्जनयुग्ममेतत्॥ ४॥

पदद्वयं नञ्निषेधार्थः वशब्द इवार्थः वरुणो वः समाख्यात इवार्थेचतदव्ययमिति कोषः। पलमुन्मानमांसयोरिति मेदिनिः। इकारः कथ्यते कामइत्येकाक्षरकोषः॥ २॥

एक इति। एकः केवलोब्रह्मरूपः पदार्थः जनवरः जनमुत्पत्तिं वरति निवारयतीत्यच् भवच्छेदक इत्यर्थः वृञ आवरणे वा चुरादिः। निवरते नित्यं प्रजोपद्रवमित्यस्यैव प्रयोगः नलिनी प्रधानपद्मं सहस्रदलाख्यं तद्दलसमीपकर्णिकान्तर्गतः दृष्टः प्रत्यक्षीकृतश्चेत् खं निरतिशयसुखं करोति ब्रह्मानन्दस्य सर्व्वानन्दातिशयित्वात् नन्वेवं विदुषाभवता सकिं न निरीक्ष्यते, आह-एतन्नयनखञ्जनयुग्मं तं न आर दृष्टुं न प्राप। अतो नाहं विन्दे नलभइति आट्त्वेभयत्वान्वीयते, अभावार्थोटशब्दोयाप्रश्लेष्यः। अभावे नह्यनोनापीत्यमरः। खञ्जनरूपनयनस्य नैसर्गिकलौल्यं ख्यापितं, किंभूतं भवत्, भ्रान्तियुक्तम्। भः पुंसि भार्गवभ्रान्त्योरिति कोषान्तरम्। ज्ञाननयनावलोक्यस्य कुत एतन्नयनावलोक्यत्वं ज्ञाननयनैतन्नयनयोर्वैलक्षण्यं दृष्टान्तेन साधयति। वद कथय अजानां छागानाम् इनो नेता किं तुरङ्गबलाधिपतेः कर्म्म करिष्यति तस्माद्यथा अजपालतुरङ्गपालयोः पशुपालत्वाभेदेपि कर्म्मणि महद्वैलक्षण्यं तथैतन्नयनज्ञाननयनयोरपि अवलोकनकारणत्वाभेदेऽपि महद्वैलक्षण्यमिति। आधिपत्यम् इति कर्म्मणि यण्ब्राह्मण्यमित्यादिवत्। खमिन्द्रिये पुरे चेत्ते शून्ये

**येये खञ्जनमेकमेव कमले पश्यन्ति दैवात् क्वचित् ते सर्व्वे कवयो भवन्ति सुतरां प्रख्यातभूमीभुजः। त्वद्वक्त्राम्बुजनेत्रखञ्जन-**

भिन्दौ विहायस्त्रि। संवेदने देवलोके शर्म्म स्यपि नपुंसकमिति मेदिनिः। दूनः पत्यौ न्टपार्कयोरितिच॥ ४॥

येये इत्यादि। ब्रह्मरूपिणीं स्तौति येये कवयो योगपण्डिताः कवय इत्यत्र कविनइतिप्रायः पाठः एकमेव ब्रह्मरूपं दैवात् भाग्यात् क्वचित्स्थले गृहे तपोवनेवा पश्यन्ति, ते सर्व्वे सुतरां अतिशयेन प्रख्याता या भूमीस्थानं सत्याख्यं तद्भुजो जायन्ते। भूमीर्क्षितौ स्थानमात्रे इति वैजयन्ती। वृत्तकमले सहस्रदलाख्ये किंभूतम् अखं पाणिपादादीन्द्रियरहितं तथाच अपाणिपादोजवनो ग्रहीतेत्यादि तथाञ्जनं जनयतीत्यच् सर्व्वोत्पादकमित्यर्थः। तदीयस्फलिङ्गानामेव जन्तुरूपत्वात्। हे मुग्धे त्रैलोक्यसुन्दरि भगवति येये जनास्तवखं चरणरूपमिन्द्रियं पश्यन्ति तथा तदीयमम्बु धावनतोयं पश्यन्ति सेवन्ते धातूनामनेकार्थत्वात्। तेते अत्रजनेजन्मनि कलाः कं सुखं लान्ति सुखिनइत्यर्थः जनयुगं जन्मद्वयं नपश्यन्ति एतज्जन्मनैव तेषां जन्मसमाप्तिर्भवतीत्यर्थः। एतेनैहिक पारत्रिकाभिमतसम्पादकत्वम्। अत्राप्यशब्दःप्रश्लेष्यःत्वद्वक्त्रात्वदीयस्तावकेन सह सोपि तथैवस्यादित्यर्थः इतीदंकिमद्भुतं नाद्भुत मित्यर्थः। तस्माद्ब्रह्मावलोकत्वच्चरणावलोकादिनोरुतुल्यत्वमिति। वक्तीति वचनमिह स्तुतिरूपतया परिणमति। अतएवार्थान्तरसंक्रमितवाच्यो ध्वनिरयं लक्षणामूलः प्रयोजनञ्च स्वच्छन्दप्रस्फुरत्वप्रतिपादनं तथाच भरतः अविवक्षितवाच्यो य स्तत्रवाक्यं भवेद्ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतमिति अत्रैवोदाहृतं काव्यप्रकाशकारेण त्वामस्मिवच्मिविदुषां

युगं पश्यन्ति ये ये जनास्ते ते मन्मथबाण-
जालविकला मुग्धे किमत्यद्भुतम् ॥ ५ ॥
झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते
ग्रहणसमयवेला वर्त्तते शीतरश्मेः। तदिह

समवायो वर्त्तत इति। आप्नोयां मतिमादाय स्थितिमत्वविधेच्छि-
तदिति, जलवचनाद्युपदेशादिरूपतया परिणमति। एवं कि-
म्भूतं मन्मथबाणजालवि, मन्मथं कामं वातिस्म हिनस्तिस्म वा-
वातिगन्धनयोः अत्र गन्धनं हिंसा वनगम्य अर्हनइत्यस्य प्रयो-
गात् स शिवस्तस्य बाणजालं प्राणजालं व्ययति संवृणोति व्येञ
संवरणे क्विपि संप्रसारणं तद्दीर्घमन्तस्येति दीर्घत्वे नपुंसकलक्ष-
णो ह्रस्वः पञ्चेन्द्रियाणि सोमोऽग्निर्वायुः सत्वं रजस्तमः। भूता-
त्मा च मनश्चेति प्राणाः प्रोक्तास्त्रयोदशेत्यायुर्वेदे इयमत्रागमवार्त्ता
हृदयावस्थितया भगवत्या भगवान् खलु संहारादिविभु यदा सा-
व्यक्तरूपा भूत्तदा तां हृदयाद्वहिर्गतामाकलय्य शिवः शवरूपो-
ऽभूदिति। बाणेति अण प्राणनइत्यतो दैवादिकाद्घञ मूर्द्ध-
न्यन्तोयमिति वोपदेवः रमानाथेनाप्येक इत्यनेन तन्मतमनुगृ-
हीतम् ॥ ५ ॥

झटितीत्यादि। कस्यचिद्योगिनोऽयमुपदेशः। झटिति-
शीघ्रम् अशीतरश्मेः अशीता अनलसाः सन्तो विस्तमरा रश्म-
योज्योतींषि यस्य तस्य परमब्रह्मणः। यद्वा हे अशीत अनलस
रश्मे महाज्योतिःस्वरूपस्य ब्रह्मण इति। तस्य गेहं स्थानं
सत्यलोकाख्यं प्रविश कुत्र कान्ते कं शिरस्तत्र अन्तशब्दः स्वरूपे
गिरोऽत्र सुमेरोरेव तत्रैव सत्यलोकावस्थानात्। तदुक्तं भगवता
शिवेन श्रीनिर्वाणतन्त्रे। ज्ञानपद्मस्योर्द्ध्वदेशे सहस्रदलपङ्कजम्।
अधोवक्त्रं हि तत् पद्मं सुमेरोर्मूर्ध्नि संस्थितम्। इत्युपक्रम्य-

विमलकान्तिं वीक्ष्य नूनं सराहुः ग्रसति तवमुखेन्दुं पूर्णचन्द्रं विहाय॥ ६॥

कस्तूरीवरपत्रभङ्गनिकरो भ्रष्टो न गण्ड- स्थले नोलुप्तं सखिचन्दनं स्तनतटे धौतं न नेत्राञ्जनम्। रागो न स्खलित

पद्ममध्ये वीजकोषे भुवनानि चतुर्द्दश। स्थानं बहुविधाकारं सर्व्वदेवस्य चाश्रयम्। तन्मध्ये सत्यलोकश्च महारुद्रस्य कारणा- मित्यादि। वह्निर्भूर्लोकादि षट्के मातिष्ठ कृतकृत्याह, इह- वह्निस्तवग्रहणसमयवेला वर्त्तते ग्रहणं कालग्रस्तता। तस्य समयोनिश्चयः सएव वेलावेष्टनं साटक्षि भूलोकादिषट्कस्यानि- त्यत्वात् तत् स्थानमप्यनित्यमिति। कथं प्रवेष्टव्यमित्युपाय- मुपदिशति। मुखेन्दुं वीक्ष्य मुखे मुखसमीपे इन्दुर्यस्य तं चन्द्रशे- खरमाराध्य। सत्यलोकस्याविनश्वरत्वमितरेषां तद्व्यतिरेका- च्चोपपादयति समुखेन्दुः शिवोरुद्ररूपेण तद्ब्रह्मणोगेहं विहा- य ग्रसति सर्व्वमित्यर्थः। राहुः पूर्णचन्द्रमिवेति लुप्तोपमा विम लकान्तिमिति मुखेन्दुविशेषणम्। शीतोष्णसेव बहुवारतरौच इष्ठइति धरणिः कशिरोष्टस्तुनोरित्यमरः। अन्तं स्वरूपे नाशे ना- रास्त्रीगेषेऽन्तिके त्रिष्विति मेदिनिः॥ ६॥

कस्तूरीत्यादि। अकृतमानसम्भागस्य कस्याचिदनुगयोक्ति- रियम्। हे गजेन्द्रमन्दगमने गजेन्द्रं मन्दयतीति गजेन्द्रमन्दः सिंहस्तेन गमनं यस्याः हे सिंहवाहिनि इत्यर्थः। मम स्तनतटे स्तनसमीपे हृदयेऽनाहताख्यसरोजावच्छिन्नमानसयागविषये, तद्गण्डस्थले कस्तूर्य्युत्तमचित्रविशेषव्यूहः नष्टः नदत्तः। किमित्याचेमे चन्दनं नोलुप्तं किन्तु विच्छिन्नमेव तदपिनदत्त-

स्तवाधरपुटे ताम्बूलसम्बद्धितः किं रटासि
गजेन्द्रमन्दगमने किंवाम्हदुस्तेपतिः ॥ ७ ॥
समायाते कान्ते कथमपिच कालेनबहुना
कथाभिर्देशानां सखिरजनिरर्द्धं गतवती

मित्यर्थः। तवाधरपुटे ताम्बूलजनितो रागोनोऽस्माकं सम्बन्धे नकिं स्खलितः ताम्बूलमपिनदत्तमित्यर्थः । मृदुरिति रागविशेषणम् । तथानेन नायकेन शिवेन सह ते तव ख्यङ्गं मिलनं नभीतं न चिन्तितं ध्यानोपरक्तस्थाने शिवेन सार्द्धं तवसुखाधिकामित्-ध्यातेत्यर्थः।हे सखीति शिवस्येत्यर्थात् यद्वा हृदय विशेषणकेतद तथाहि सखायमाचष्टे ग्टह्लाति वेतीनन्तात् क्विप्। तथाच चेतसो मिथ्याज्ञानप्रयोजितमित्वानुरागवशादेवायमस्माकमनर्थ इति। पति स्त्वं किं रुष्टासिपतिःसर्व्वेश्वरी पतिःस्त्रिया-मपि वर्त्तत इति श्रीपतिः अतएवामरेणापि विशेष्यनिम्न उक्तः न स्खलित इति शषसेष्वघोषपरेषु इत्यादिना विसर्गलोपः ॥७॥

समायात इत्यादि। प्राग्विविक्तस्य पश्चादसत्सङ्गेन ततोम्ब-ष्टस्य कस्यचिदनुशयोक्तिं वर्णयति देशानामुपदेष्टॄणां कथाभि-र्बहुनाकालेन कथमपि कष्टन्दृष्टप्रकारेण अकान्ते कं सुखं तद्वि-परीतमकं तस्य सांसारिकदुःखस्यान्ते नाशे समायाते संप्राप्ते सखिरजनिरर्द्धं सख्युर्मोहसहायभूतस्य रजस्य मध्यमगुणस्य निरर्द्धं अधुरद्धो घञि अर्द्धोवृद्धिस्तस्याभावेन वाटतीयासम्प्योरित्यम्। प्रियतमे पुलाटौ लीलागतवती नष्टा। ततोऽनन्त-रममद् संसर्गेण यावदहं कलहकुपितास्मि कलहस्य कुत्सितः पिता जनकोऽस्मि, तमःसमुदयात्। तावत् सपत्नीव सपत्नः शत्रुः तस्यस्त्रीव इयं प्राचीदिक् प्राचीनादिग्मा पूर्व्वावस्थाभवद्

ततोयावल्लीलाकलहकुपितास्मि प्रियतमे
सपत्नीवप्राचीदिगियमभवत्तावदरुणा ॥ ८

श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रच-
ण्डातपः क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः
श्लाघ्योऽतिदाहानलः । यत्कान्ताकुचपा-
र्श्वबाहुलतिका हिल्लोललीलासुखं लब्धं
कुम्भवरत्वया नहि सुखं दुःखैर्विनालभ्यते
॥ ९ ॥

किंभूता अरुणा अरुणयति क्रोधादिना विकृतिजननीत्यर्थः ।
सुखशीर्षजलेषु कमिति मेदिनीकरः । रजोरेणौपरागे स्यादा-
र्त्तवे च गुणान्तर इति जान्तेः। सएवात्र अर्थः पादरजो-
पमा इत्यस्यप्रयोगः । एतावताह्यसत्संसर्गस्य विवेकभङ्गहेतु-
त्वेन सर्व्वथा परिहरणीयत्वमित्यवधेयम् ॥ ८ ॥

श्लाघ्यमित्यादि । हे कुम्भवर कुम्भं कुम्भकं प्राणायामाङ्गं
हणाते अर्जयति यस्तदामन्त्रणं हृङ सम्भक्तौ अच् यद्वा कुम्भोवार-
स्त्रीकामुकस्तं वरति वारयति । असत्संसर्गहीनेत्यर्थः । कुम्भ-
प्रमाणमग्रे वक्ष्यते । यद्भूयतः कान्तायाः कुचादीनां हिल्लोलस्य
दोलनस्य यालीला तद्रूपा वा लीला तत्सुखं त्वयानहि लब्धम् ।
कान्तासंसर्गपरित्यक्तः, अतस्ते नीरसकाष्ठताड़नशतं श्लाघ्यं रस-
स्याभावो नीरसं तत्काष्ठाञ्चत्कर्षोयस्य तस्यभावस्तत्ता तया
तस्यां वा चड़नशतमुद्यमशतं श्लाघ्यम् । अड़ उद्यमे युट्, पङ्क-
निचयपदं सकलदुर्गोपलक्षणम् अन्यत् सुबोधम् । ननु कान्तासुख
परित्यागपूर्व्वक प्रचण्डातपादिक्लेशसहिष्णुतया परत्रापि सुख

किं किं वक्त्रमुपेत्य चुम्बसि बलादनिर्ल्लज्ज-
लज्जा क्व ते वस्त्रान्तं शठमुञ्च मुञ्च शपथैः
किंधूर्त्तवाग्वञ्चनैः । खिन्नाहंतव रात्रि
जागरवशात तामेव याहि प्रियां निर्म्मा-

सुखमित्यादि
मुलादनीयमिति, क्लेशानर्थक्यमाशङ्क्य समाधत्ते
दुःखैरैहिकैर्विना सुखं स्वर्गम् अतिशयितं खं शर्म्म न लभ्यते विन
इत्यतः अकारः प्रश्लेष्यः, तस्मात् क्षणिकैहिकसुखनिरसनेन प्र
चण्डातपादि यत्किञ्चिद्दुःखं स्वीकृत्यापरत्र निरतिशयसुखस-
म्पत्तिरिति । कुतः क्लेशानर्थक्यमिति । काष्ठोत्कर्षेस्थितौदि-
शीत्यमरः । हिल्लोलत् कण्ठदोलनइति वोपदेवः । सुपूजायां
स्वर्गार्थेचेति मेदिनिः । खशब्दप्रमाणं प्रागुक्तम् ॥ ९ ॥

किं किमित्यादि । कश्चिद्योगी कञ्चिदुपदिशति । हे निर्ल-
ज्ज ते लज्जा कागता । किं किं इत्याद्यमे वक्त्रमुपेत्य बलादनौचि-
त्यात् चुम्बसि सुखमस्तोति कृत्वैव सकलपदार्थं स्वेच्छया स्तोकं
स्तोकं प्रस्तौषि सिद्धान्तानिवर्हणेन सर्व्वेषां किञ्चित् किञ्चित्
प्रस्ताव चुम्बनं, शपथैः प्रियगिरस्पर्शादिभि र्मिथ्यानिरसनैः
शठं शाठ्यं मुञ्चत्यज, शठ कैतवे भावे क्विप् धूर्त्तवाचां वञ्चनैः
किं छलवागुपन्यासैः किं शपथैः मूर्त्तिरागोप्यते इतिपाठे शाठ्यं
मया नकरिष्यते तवामीशपथाः प्रत्ययका इत्युक्तावपि शपथैः किं
शाठ्यस्यमूर्त्तिः स्वरूपमागोप्यते आच्छाद्यते शपथेषु कृतेष्वपि कृतं
शाठ्यं स्वयमेव प्रकाशत इत्यर्थः । अनन्तरं कर्त्तव्यमुपदि-
शति,हन्तानुकम्पादीयावरा श्रेष्ठा ए शियाय खिन्ना तंद्रष्टुं व्या-
कुला इत्यर्थः तामहिप्रियां कुलकुण्डलिनीं तं उं शिवञ्च अव
संयोजनेन शोणीहि, किं कृत्वा निर्म्माल्य, मल मल्ल धारणे वायु

त्योजझ्झित पुष्पदामनिकरे का षट्पदा
नां रतिः ॥ १० ॥

वाणिज्येन गतः स मे गृहपतिर्वार्त्ताऽपि न
श्रूयते प्रातस्तज्जननीप्रसूततनया जामातृ

धारयित्वा इत्यर्थः प्राणमन्त्रोच्चारणपूर्व्वकवायुसञ्चारणेन तयोः संयोगात्। एतेन मन्त्रचैतन्योपाय उपदिष्टः सा कीदृशी त्रिषुगुणेषु सत्वादिषुजागरोऽवबोधस्तस्य वश मतति सततं प्राप्नोति अत सातत्यगमने क्किप्, तां कीदृशीम् अवस्त्रां वस्त्रपदमावरणमात्रोपलक्षणं निरावरणां स्वतन्त्रामित्यर्थः। शठमित्यतोऽनन्तरम् उञ्चेति पदद्वयम्। उकारः शङ्करः प्रोक्त इत्येकाचरकोषः। तामित्यत ए इतिचतुर्थ्यन्तम् आः स्याच्छङ्करवेधसोरिति धरणिः। नित्यं कर्म्मणि तुमोऽप्रयोगिणइति चतुर्थी अधातोरित्यत्र धातुग्रहणस्याश्रङ्गोपलक्षत्वाल्लोपे प्रत्ययमात्रं पदं ततः अवेति क्रियापदम्। तयोः प्रीतिरन्यतो न सम्भवतीति साधयितुमाह उज्झितेत्यादि षट्पदानां भृङ्गाणाम् उज्झितपुष्पदामनिकरे उज्झितमलब्ध पुष्पदामयेन तादृशि समूहे कारतिः प्रीति र्नकापीत्यर्थः यथा मधुरवस्त्वन्तरलाभेऽपि मकरन्दालब्धाभृङ्गाणां न प्रीतिस्तथातयोर्नान्यां व्याप्यप्रीतिरिति। स्तोमौघनिकर व्रात वारसंवात सञ्चयाइत्यमरः॥ १० ॥

वाणिज्येनेत्यादि। कस्यचिज्ज्ञानात्मनःपरामर्शोऽयं सगृहपतिः गृहस्य देहरूपस्य पतिर्जीवात्मा वाणिज्येन हेतुना मातृगेहं मातृगर्भरूपंस्थानं गतः भारतभूम्यवतरणस्याभिमतफलसम्पादकत्वसम्भावनात्। प्रातः सृष्टि समये प्रातः पदं सृष्टिकालपरम्। निशापदं चयकालपरम्। दिनरात्र्योरुदयचयकल्पत्वेनोक्तत्वात्। अजोविष्णुःसम्बन्धित्वेन विद्यते यस्याः सा

पवनोपरिपङ्क्लेपस्तापायकेवलमसौ मम
तापशान्त्यै ॥१६॥ दृष्ट्वायासां नयनसुषमां
वङ्कवाराङ्गनानां देशत्यागः परमकृतिभिः
कृष्णासारैरकारि। तासामेवस्तनयुग-
जिताः कुम्भिनः सन्तिमत्ताः प्रायोमूर्खः

किमपीत्यर्थः। प्रत्युत दुःखजनकतां साधयति, यद्वत्वादिव्य-
तामायम्। पवनं स्तत् पात्रपाकार्थं कुम्भकाराणां गर्त्तभेदः
पुरुन इतिख्यातः। पवनं कुम्भकारस्य पाकस्थाने नपुंसकम्।
निष्पाव मरुतोः पुंसीतिमेदिनिः। चन्दनेति, चदिआह्लादने
दीप्तौ चेत्यतोयुट। बाध इत्यामन्त्रणपदस्यासिद्धत्वेऽपि आशा-
इति पूर्व्वतरपदमाश्रित्यते इत्यादेशः॥ १६॥
दृष्ट्वेत्यादि। कृष्णः सारो येषां तैः कृष्णपरायणैः। वङ्कवा-
राङ्गनानाम् वङ्कनखेत्यादिना दण्डके वगिगत्यर्थः वङ्कं गमनं
वारयन्ति दर्शनालापनादिना तादृशीनामङ्गनानां नयनयोः
सुषमामुत्कृष्टां कान्तिम् आयासोव्यामोहस्तत् कारिणीं दृष्ट्वा
ज्ञात्वा तद्विशिष्टदेशत्यागः कृतः। आस्तुतावदालापसम्भोगा-
दिव्यापारो लोचनचातुरीमेव व्यामोहसम्पादिकांसम्भाव्य-
तपोवनं गतमित्यर्थः। तासामेव स्त्रीणां स्तनयुगजिताः सम्भो-
गवशीकृताः कुम्भिनः सन्ति, कुम्भो वेश्याकामुकस्तद्विशिष्टा
असत् संसर्गिण इत्यर्थः। अत्रार्थान्तरन्यासमाह मत्ताइत्यादि
अमूर्खः पण्डितः प्रायः परिभवविधौपरिनिष्पाद्यमानात्मा
भिभवविधौ अभिमानं ज्ञानं तनोति नमत्ता मूर्खाइति तस्मात्
असत्संसर्गपरिहारे पाण्डित्येचावश्यमेवयतनीयमित्युपदिष्टम्।

परिभवविधौनाभिमानं तनोति ॥ १७ ॥
अपूर्व्वोदृश्यते वह्निःकामिन्याःस्तनमण्ड-
ले। दूरतोदहते गात्रं हृदिलग्नस्तु शी-
तलः ॥ १८ ॥ कथमेतत् कुचद्वन्द्वं पतितं

अमूर्ख इत्येकवचनेन विरलत्वं मत्ताइति बहुवचनेनाविरलत्व मत्यपीपदत्। सुषमापरमा शोभेत्यमरः । अभिमानोऽर्थादि दर्पे ज्ञाने प्रणयहिंसयोरित्यपि । कुम्भोवारस्त्रियाः कान्ते रक्षोऽग्निप्रभेदयोरिति पुरुषोत्तमः ॥ १७ ॥

अपूर्व्वइत्यादि । कश्चिज्जितेन्द्रियः कांश्चित् कामजयोपाय-मुपदिशति । कामिन्याः स्त्रियाः मण्डलेनस्त न तिष्ठत कुत-इत्याह यतोऽयं दुःपरितापकोऽपूर्व्वः अद्भुतो वह्निर्दृश्यते कीदृक् शीतलः शीतोऽलसोजड़इति यावत्। भावप्रधान निर्देशाच्छै-त्यार्थः तल्लाति ददाति जाड्यमदित्यर्थः। वह्नेः शीतलत्वं विरु-द्धमित्यपूर्व्वत्वमेव तथा हृत् जहाति प्रसह्यकरोति इति क्विप् हृप्रसह्यकरणे जुहोत्यादिः । तथा इलग्नः कौ कामे सक्तः । अतएतेनोपायेन इगात्रं कामशरीरं दहते कामं जय-तेत्यर्थः। एतेन कामस्य प्रधानसामग्रीभूतकामिनीसंसर्ग परित्यागादेव जयः सुकरइति । तथाच प्रबोधचन्द्रोदये चन्द्र-स्यन्दनकिन्द्धामधवला रात्रिर्द्विरेफावली झङ्कारोन्मुखरा वि-लास विपिनः प्रान्तोवसन्तोत्सवः। सान्द्रध्वानघनोदयाश्च दि-वसा मन्दाः कदम्बानिलाः शृङ्गारप्रमुखास्सकारुसुहृदोनार्य्यां जितायां जिताः ॥ १८ ॥

कथमित्यादि । कश्चित् कञ्चित् कलहायमानं हितोपदे-शद्वारा शिक्षयति । हे त हे शठक कथं इनुद्वं कलहः पतितसुप